Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

| | | | | | |
|---|---|---|---|---|---|
| | | | | | 2016 तमे दिवसे काञ्चीपुरस्थे श्रीचन्द्रशेखरेन्द्रसरस्वतीविश्वमहाविद्यालये **प्रो.डा. रामकृष्ण पिशिपाटि महोदयानां** करकमलाभ्यां अर्पितम् । अस्यमुख्यसम्पादकाः विद्यावाचस्पति सदानन्दझाः सन्ति। कार्यक्रमे तत्रादौ श्रीचन्द्रशेखरेन्द्रसरस्वतीविश्वमहाविद्यालयस्य अध्यापकाः डा. हीरालाल दाश महाभागाः सारस्वतनिकेतनं तथा च जाह्न्व्याः लोकलोचनविषये सर्वमपि रहस्यम् उपस्थापितवन्तः । तत्र कथं ते जाह्न्वया सह संयोजिताः तथा तत्सेवया नियुक्ता इति विषयमपि उक्तवन्तः । सम्पादकाः डा. दाश महाभागाः एतदर्थं डा.विपिन कुमार झा महाभागानां कृते धन्यवादमर्पितवन्तः । एतदर्थं जाह्नव्याः सहसम्पादकः मु.विनोद इति नामधेयः संस्कृतशोधच्छात्रः, श्रीचन्द्रशेखरेन्द्रसरस्वतीविश्वमहाविद्यालयस्थः, बहुधा सहायम् अकरोत्। अनन्तरं प्रो.डा.रामकृष्णपिशिपाटि महाभागाः सङ्कायप्रमुखाः जाह्न्व्याः लोकलोचनम् अन्तर्जाले एकादशवादने कृतवन्तः । तत्र लोकलोचनसमये केचन छात्राः उपस्थिता आसन्<br>संस्कृत के लिये समर्पित जाह्नवी संस्कृत ई शोधपत्रिका के तेइसवें अंक का लोकार्पण आजकाञ्चीपुरम् के श्रीचन्द्रशेखरेन्द्रसरस्वतीविश्वमहाविद्यालय के संस्कृत डीन प्रो.डा. रामकृष्ण पिशिपाटि महोदय के द्वारा किया गया। पत्रिका के सम्पादक एवं प्रकाशक राष्ट्रिय संस्कृतसंस्थान बलाहर( प्रागपुर) के अध्यापक श्री बिपिन कुमार झा ने इस अवसर पर संस्कृत समाज एवं मीडिया को धन्यावादार्ह माना है। ज्ञातव्य है कि यह पत्रिका ज्ञानविज्ञान एवं संस्कृत जगत में होने बाली नवीन सर्जनाओं को प्रमुखता देती है। इससे पूर्व इसका विमोचन शिमला एवं बलाहर में हो चुके हैं। |
| 25-26 | II | 7 | Kurukshetra, Hariyana | 22.08.2016 | सारस्वत्-निकेतनान्तर्गतप्रकाशितायाः जाह्नवी-पत्रिकायाः पञ्चविंश-षड्विंशाङ्कयोः लोकार्पणं हरियाणास्थकुरुक्षेत्रविश्वविद्यालयस्य संस्कृत-प्राच्यविद्यासंस्थानस्य निदेशकेन, संस्कृत-पालि-प्राकृतविभागाध्यक्षेण **आचार्यललितकुमारगौडमहाशयेन** संस्कृतसप्ताहे 21 तमे दिनाङ्के रविवासरे कुरुक्षेत्रे अभवत्। तत्र अस्माकं प्रतिनिधिरूपे श्रीसुमितकुमारः कार्यसम्पादनं कृतवान्। |

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024

Since 2009
ISSN- 0976-8645
UGC RN-41039

| | | | | | |
|---|---|---|---|---|---|
| 27-28 | III | 7 | जयपुर | 31.12.2016 | लोकार्पणकर्ता : श्रीप्रतापसिंहसिंहवी<br>पूर्व मंत्री व विधायक (छबड़ा) 12:30<br>जयपुर में लोकार्पण करते हुए श्रीसिंहवी ने कहा कि संस्कृत में ई-जर्नल को बढ़ावा मिलना चाहिए। इससे संस्कृत सहजता से उपलब्ध हो सकेगी। जाह्नवी ई-जर्नल बहुत सुंदर कल्पना है। 12:32<br>जाह्नवी संस्कृत ई जर्नल के 28वें अङ्क का लोकार्पण शास्त्री कोशलेन्द्र दासजी के प्रतिनिधित्व **में श्रीप्रतापसिंहजी (Ex. Minister UDH, Govt. Rajasthan)** के (31.12.2016 ) द्वारा सिविल लाइंस जयपुर में किया गयाजाह्नवी संस्कृत ई जर्नल के 28वें अङ्क का लोकार्पण शास्त्री कोशलेन्द्र दासजी के प्रतिनिधित्व में श्रीप्रतापसिंहजी (Ex. Minister UDH, Govt. Rajasthan) के (31.12.2016 ) द्वारा सिविल लाइंस जयपुर में किया गया |
| 29 | I | 8 | **North Dartmouth, MA** | 20.05.17 | Institute of Advanced Sciences \| 86-410A Faunce Corner Rd North Dartmouth MA 02747 \| Telephone: 508-999-1191<br>Date: May 20, 2017<br>Dr. Bipin Kumar Jha<br>Department of Sahitya, Vedavyas Campus<br>Rashtriya Sanskrit Sansthan<br>Balahar, Via Garli, Dehara, Kangra<br>Himachal Pradesh – 177108<br>India<br>Dear Dr. Jha,<br>I am so pleased to learn about the publication of Janhvi Sanskrit E-Journal. It is a much needed effort, especially from young scholars like yourself. Sanskrit is not just a language but it is integrated treasure of knowledge that requires deep comprehension both linguistically and philosophically. I would also dare to add that Sanskrit language may be a more suitable language for practice and expression of modern science as well.<br>I am glad that you have allowed articles in other languages like Hindi and English to be published in the journal. This will allow many other aspects of the language and knowledge amenable to Sanskrit to be expressed for the benefit and comment of Sanskrit scholars.<br>My very best wishes for the journal, and congratulations to you and your editorial team!<br>Sincerely,<br>Bal Ram Singh, Ph.D<br>Professor and Executive Mentor<br>Web: www.inads.org , Email: bsingh@inads.org<br>**Prof. Bal Ram Singh,** Institute of Advanced Sciences, North |

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024

Since 2009
ISSN- 0976-8645
UGC RN-41039

| | | | | | | |
|---|---|---|---|---|---|---|
| | | | | | Darth Mouth, MA | |
| 30-31 | II | 8 | कुरुक्षेत्र, हरियाणा | 13-11-17 | डा. बलदेवसिंह मेहरा महोदयैः<br><br>Representative Shri Mahesh Dutt | |
| 32 | I | 9 | Madhubani, Bihar | 22-02-18 | ई-जर्नल के सम्पादक सह लोकार्पण संयोजक डॉ.रामसेवक झा ने बताया कि 20 जनवरी 2010 को तिरुपति विद्यापीठ के कुलपति हरेकृष्ण शतपथी के द्वारा प्रथम अङ्क का लोकार्पण किया गया । उसके बाद यह त्रैमासिक पत्रिका देश के विभिन्न विश्वविद्यालयों,प्रशासनिक संस्थाओं के अलावे विदेश में अटलाण्टा में भी पिछले अङ्कों का विमोचन किया जा चुका है । संस्कृत के प्रथम ई-जर्नल को यूजीसी के अलावे इम्पेक्ट फेक्टर की भी मान्यता मिल चुकी है । प्रत्येक तीन मास में संस्कृत-हिन्दी-अंग्रेजी भाषों में शोधपत्र देश के विभिन्न कोणे से प्राप्त होते हैं । जिसे मास के अन्त में निर्धारित स्थान पर लोकार्पण किया जाता है । 32 वें अंक में कुल 21 शोधपत्र प्रकाशित किये गये है ।<br>ई-जर्नल के प्रधान सम्पादक लगमा के व्याकरण विभागाध्यक्ष विद्यावाचस्पति डॉ.सदानन्द झा ने बताया कि शोधार्थियों छात्रों को शोध में नूतन आयाम प्रदान करने में यह पत्रिका श्रेयस्कर है । प्रकाशक डॉ.बिपिन कुमार झा के निरन्तर प्रयत्न से यह जर्नल नित्य नूतनता को प्राप्त कर रहा है ।<br>लोकार्पण समारोह में अपर समाहर्ता दुर्गानन्द झा,राजस्व अधिकारी सत्यप्रकाश , आपदा पदाधिकारी अरविन्द कुमार झा, वाटसन के शिक्षक सुधांशु शेखर झा,शिक्षाविद् डॉ.रामसेवक झा सहित कई गणमान्य लोग सम्मलित थे । | |

| | | | | | | |
|---|---|---|---|---|---|---|
| 33 | II | 9 | सम्पूर्णानन्द वि. वि वाराणसी, उ.प्र. | Apri, 18 | www.Jahnavisanskritejournal.in<br>VC, Sampurnand Sanskrit University Varanasi<br>Representative- Dr. Jagadish Tiwari. | |
| 34-35 | III | 9 | सारनाथ, उ.प्र. | 01-11-18 | जाह्नवी संस्कृत पत्रिका का विमोचन- संस्कृतभाषाकी प्रथम ई.पत्रिकाके 34वे-35 वें अंकका विमोचन **प्रोफेसर देवराज सिंह** (पूर्व कुलसचिव) केन्द्रीय तिब्बती संस्थान सारनाथ के कर-कमलों द्वारा किया गया।<br>डॉ सिंह ने पत्रिका को संस्कृत भाषा के विकास में सहायक बताते हुए उत्तरोत्तर सफलता की कामना की। उन्होंने कहा कि आज के डिजिटल युग में यह ई.पत्रिका संस्कृतवाङ्मय में निहित हमारे ज्ञान-विज्ञान को जन-जन तक पहुचाने का सरल और उचित माध्यम है। साथ ही उन्होने इस पत्रिका के मुख्यसंपादक डा. सदानन्द झा साथ पत्रिका से जुड़े सभी सदस्यों को कोटिशः धन्यवाद के साथ उनके सफल जीवन की कामना भी की।<br>जाह्नवी पत्रिका के विमोचन में मुख्यरूप से **प्रो.धर्मदत्त चतुर्वेदी,प्रो.बाबूराम त्रिपाठी,डॉ.** | |

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

| | | | | | |
|---|---|---|---|---|---|
| | | | | | अनुराग त्रिपाठी,डॉ. श्रीनाथधर द्विवेदी, डॉ प्रशांतजी,डॉ रविरंजन द्विवेदी, डॉ विवेकानंद जी आदि उपस्थित थे। संचालन लोकार्पण प्रतिनिधि डा. रीतेश कुमार चतुर्वेदी ने किया। |
| 36-37 | I | 10 | राजाङ्गणम् , श्रीकृष्णमठः , उडुपि | 09-03-2019 | • उद्घाटनम् - परमपूज्याः यतिकुलचक्रवर्तिनः श्री श्री विश्वेशतीर्थ महास्वामिनः , पीठाधिपतयः, पेजावर मठः तथा परमपूज्याः श्री श्री विद्याधीशतीर्थ महास्वामिनः , पर्याय पीठाधिपतयः, उडुपि श्रीकृष्णमठः<br>स्थलम् - राजाङ्गणम् , श्रीकृष्णमठः , उडुपि.<br>• दिनाङ्कः - 9th March<br>• समयः - 17:30<br>• सन्दर्भः - श्रीराघवेन्द्रतीर्थमहास्वामिनां वर्धन्त्युत्सवे<br>• संयोजकः - डा. सुमन् आचार्यः , प्राध्यापकः, लोयोला महाविद्यालयः तथा उपसंपादकः , जाह्नवी अन्ताराष्ट्रियसंस्कृतपत्रिका |
| 38 | II | 10 | BLI, New Delhi | 14.07.2019 | उद्घाटनम् - प्रो. गयाचरणत्रिपाठिमहोदयैः<br>स्थलम् – भोगीलाललहरचन्द-इण्डोलोजिसंस्थानम्, नव देहली<br>दिनाङ्कः - 14/07/2019<br>संयोजकः – प्रो. अशोकशर्मा, प्रतिनिधि , जाह्नवी अन्ताराष्ट्रियसंस्कृतपत्रिका |

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

| | | | | | |
|---|---|---|---|---|---|
| 39-40 | III | 10 | **Midnapore College** | 08-06-2020 | • Inaugration- Dr. Gopal Chandra Bera, Principal, Midnapore College(Autonomous) College with potential and Excellence by UGC, NAAC accredited - A+ (3.6 in 4 point scale)<br>Place- Midnapore College<br>Date - 8th Jan, 2020, 4:00 PM<br>Representative- Dr. Giridhari Panda |
| 41 | I | 11 | Online | 26th April, 2020 | • Prof. Rajaram Shukla, VC Sampurnanand Sanskrit University, Varanasi |
| **42-43** | **I** | **11** | Online | 20.09.2020 | 23 अगस्त को जगद्गुरु रामभद्राचार्य करेंगे जाह्नवी संस्कृत ई-जर्नल के अभिनव अंक का लोकार्पण<br>**पद्मविभूषण सम्मानित तुलसीपीठाधीश्वर जगद्गुरु रामानंदाचार्य स्वामी श्रीरामभद्राचार्य जी महाराज**<br>Place- Online through G-Meet<br>Date - 20th September, 2020 11:00 AM<br>Representative- Ms. Prateeksha Mishra. |

Since 2009
ISSN- 0976-8645
UGC RN-41039

| | | | | | |
|---|---|---|---|---|---|
| **44** | **I** | **12** | Online | 30.01.2021 | Inaugration- Prof. Asanga Tilakratne<br>Place- Online through G-Meet<br>Date - 30th January, 2021 11:00 AM<br>Representative- Dr. Ramesh Jha |
| **45-46** | **I** | **12** | Online | 18.12.2021 | Prof Tankeshwar Kumar, Hon'ble Vice-Chancellor, Central University of Haryana, Mahendragarh<br>Place- Online through G-Meet<br>Date - 18th December, 2021 11:00 AM<br>Representative- Dr. Bipin Kumar Jha |
| **47-48** | I | 12 | **Online** | | लोकार्पणकर्ता माननीयः श्रीमान् गोविन्द सिंह ठाकुरमहोदयः, शिक्षा, भाषा, कला एवं संस्कृतिमन्त्री, हिमाचलप्रदेशः<br>लोकार्पणतिथिः 09.08.2022, 8:00 PM<br>लोकार्पणप्रतिनिधिः श्रीरिपुदमनपण्डितः |
| **49** | I | 13 | Lucknow | 17.01.2023 | प्रो. विजयकुमारकर्ण |

Since 2009
ISSN- 0976-8645
UGC RN-41039

| | | | | | |
|---|---|---|---|---|---|
| | | | | | CALL FOR PAPERS<br>जाह्नवी<br>YOU ARE INVITED<br>TO CONTRIBUTE<br>YOUR RESEARCH WORK<br>FOR THE LATEST ISSUE OF<br>JAHNAVI<br>SANSKRIT E-JOURNAL<br>PIF-6.5<br>visit- jahnavisanskritejournal.in/<br>Contact +91 945-9456-822 |
| 50-51 | II | 13 | JNB Darbhanga | 12.09.2023 | Jahnavi Sanskrit E Journal<br>जाह्नवी<br>Founded by Dr. Bipin Kumar Jha in 2010<br>50-51<br>Inauguration<br>By<br>Prof Shashi Nath Jha<br>Hon'ble VC, KSDSU, Darbhanga<br>Place- JNBASM Web jnbasm.net.in<br>Date -12.08.2023<br>Time -11 AM<br>URL- www.jahnavisanskritejournal.in |
| 52-53 | I | 14 | Tripura | 01.03.2024 | जाह्नवी-ई-पत्रिकायाः लोकार्पणम्<br><br>सारस्वतनिकेतननामधेयायाः कस्याश्चिद् संस्कृतसंवर्धनसंस्थायाः प्रमुखप्रकल्पेषु अन्यतमाऽस्ति जाह्नवी-ई-पत्रिकेऽति। प्रतिवर्षं संस्कृतविषयानुपादाय ज्ञानपरिवर्धनाय विदुषां प्रौढशोधलेखाः स्वविशेषस्थानमधिगृह्णन्ति अस्यां रत्नगर्भितशोधपत्रिकायाम्। अस्मिन् वर्षेऽपि भवतु तथैवेऽति दृढसङ्कल्पबद्धा जाह्नवीसम्पादनासमितिः विगते १ मार्चदिनाङ्के जाह्नवी-ई-पत्रिकायाः ५२-५३अङ्कयोः लोकार्पणमकरोत्। लोकार्पणं त्रिपुराकेन्द्रीयविश्वविद्यालयस्य सभागारे सायं ०६:०० वादने जातम्। यद्यपि प्रत्यक्षरूपेण तत्रायोजिता तथापि सर्वेषां वीक्षणसुकराय गूगलमीट इत्यनेनापि। भारतस्य संस्कृतविद्वांसो स्वोपस्थितिपुरस्सरं लोकार्पणकार्यक्रमस्य शोभां वर्धितवन्तः पत्रिकायाः निवेदकानां सारस्वतनिकेतनसंस्थापकानां डा०बिपिनकुमारझामहोदयानां |

Since 2009
ISSN- 0976-8645
UGC RN-41039

| | | | | | |
|---|---|---|---|---|---|
| | | | | | सञ्चालकत्वे लोकार्पणप्रतिनिधयः डा०सुमन.के.एसवर्याणां प्रतिनिधित्वे कार्यक्रमस्य प्रारम्भे वैदिकमङ्गलाचरणं श्रीहिमांशुबाजपेयी, लौकिकमङ्गलाचरणञ्च डा०सागरिकाभट्टाचार्या उपस्थाप्य शुभारम्भं कृतवन्तौ। ततश्च क्रमशः स्वागतभाषणं पत्रिकाया लोकार्पणप्रतिनिधयः त्रिपुराविश्वविद्यालयस्य च विशेषकार्याधिकारिणस्सहप्राध्यापकाः डा० सुमन.के.एसवर्याः, दीपप्रज्वलनं विश्वविद्यालयस्य कुलसचिवमहोदयाः, लोकार्पणकर्तारः डा. दीपकशर्मावर्या अन्ये विद्वांसश्च, जाह्नवीपत्रिकेऽतिवृत्त्योपस्थापनं सम्पादनसमितेः मुख्यप्रतिनिधयः संस्कृतान्तर्वीक्षाया मुख्यसंयोजिकाः डा०दीपिकादीक्षितमहोदया असाधयन्। ततश्च, मुख्यसम्पादकपदालङ्कारकाः परमविद्वांसः पत्रिकायाः जनकभूतास्सम्पादकाः ज्ञाननिष्णाताः डा०सदानन्दझामहागुरवः स्वाशीर्वचनैः सर्वान् उपकृतवन्तः। तदनन्तरम् ई-पत्रिकायाः लोकार्पणं त्रिपुराकेन्द्रीयविश्वविद्यालयस्य कुलपतयः डा. दीपकशर्मावर्याः कृतवन्तः। उल्लेख्यं यद् कुलपतिभि संस्कृताध्ययनमकृते सत्यपि संस्कृतपत्रिकाया लोकार्पणमस्तीत्यस्मात्तैरतीवसुष्ठुतया संस्कृतभाषाभिव्यञ्जवाक्यै लोकार्पणपर्यायं साधितवन्तः तच्च विलोक्य सर्वेऽपि प्रोत्साहिता जाताः। लोकार्पणात्परम् कुलपतिभ्यः विशेषधन्यवादज्ञापनमददन् लोकार्पणप्रतिनिधयः डा.के.एस.सुमनमहोदयाः तै साकमौपचारिकधन्यवादमुपस्थापितवन्तः निवेदकाः डा०बिपिनकुमारझावर्याः। परिशेषे डा०के.एस.सुमनमहोदयाश्शान्तिपाठेन कार्यक्रमस्य परिसमाप्तिमकुर्वन्। कार्यक्रमे प्रमुखाः संस्कृतविद्वांसः - प्रो. गिरीशचन्द्रपन्तः, प्रो. जयप्रकाशनारायणः, डा. सुनील के एस्, डा गीताशुक्ला, श्री धीरेन्द्रजी, श्री पवनमेहता, डा प्रीतिशर्मा, डा सुज्ञानमहान्ति, श्री राहुलकश्यपः, डा बालमुकुन्दः, श्रीमतीप्रिया, डा रमेशः, डा उमा, डा सरिताश्रीवास्तवः, श्रीमती सरिताजी, श्री सारण, श्रीभक्ति, श्री रिपुदमनचन्दः, श्रीमतरेखाजी, अंकितज, शालू, डा रितेशजी, डा राहुलजी, अनुरागजी, डा आनन्दजी, रमणजी, श्री उदयनाथः, अर्चनाजी, भारतीजी, डा वीरजी, अनीताजी, कुशलजी, नेहाजी, डा कुलदीपकः, श्री निशिकान्तपाण्डेयः, राहुलजी, चक्रदत्तजी अन्ये चोपस्थितास्सन्। |

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

# सम्पादकीयम्

*शिवशिरसि वस्ती संविदानन्द नीरा*

*हृदयकलुषपुंजं प्रक्षिपन्ती विदूरे ।*

*सघनतमसि दिव्यं ज्योतिरालोकयन्ती*

*प्रसरतु भुवि भव्या भारतीकापि दिव्या ॥*

अये विविधशास्त्रनिष्णाताः सुरभारतीप्रचारप्रसारबद्धपरिकराः विविधवुधवन्दितचरणाः नयैकवद्ध पक्षपाताः श्रीमन्तस्तत्रभवन्तः अनारतं द्रुहिणजायायाः समर्चकाः संस्कृतानुरागिणः पाठकाश्च । संसारस्य सर्वप्रथमान्तर्जालीयजा जह्नव्याः त्रैमासिकपत्रिकायाः द्विपंचाशत्ततममङ्कमिमं साम्प्रतं श्रीमतां तत्रभवतां भवतां कृपार्णवानां शेमुषीजुषां सश्रद्धं सादरं सांजलिं समर्पयन्नरीनृत्यति मे मनः विदांकुर्वन्त्वेव भवन्तः श्रीमन्तः देशे विदेशे विभिन्नराज्येषु संस्कृतप्रचारप्रसारार्थं परम्परानुसारेण अस्याः पत्रिकायाः लोकार्पण- कार्यक्रमः समायोज्यते । पुरापि त्रयोदशवर्षादधिककालात् तिरूपतिस्थराष्ट्रियसंस्कृतविश्वविद्यालये, वाराणसीस्थहिन्दुविश्वविद्यालये, अथ च अमेरिकास्थ-अटलाण्टानगर्यादिष्वपि तत्र समुपस्थितैः आचार्यचरणैः विविधविद्याविद्योतितान्त:करणै नानाशास्त्रविचक्षणैः स्वनामधन्यैः शतशः सुरगवी- समुपासकैः मान्यमान्यैः लोकार्पण सञ्जातम् ।

अत एव परम्परानिर्वाहाय अस्याङ्कस्य त्रिपुरास्थकेन्द्रीयविश्वविद्यालयीयकुलसचिवमहोदयैः नयैकबद्धपक्षपातिभिः

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

प्राशासनिककार्यव्यस्ततयापि लोकार्पणाय स्वकीयानुमतिर्दत्ता । एतदर्थं तान् कुलसचिवमहाभागान् आचार्यदीपकशर्ममहाभागान् प्रति सांजलिं कार्तज्ञ्यं प्रकटयति पत्रिका- परिवारः अस्मिन्नङ्के त्रयोदश-आलेखाः चयनसमित्यनुशंसया पत्रिकायां समावेशिताः पक्षपात- शून्यमनसा यू.जी.सी. परिनियमानुसारं यद्यपि सर्वे शोधनिबन्धाः प्रशंसार्हाः तथापि गव्यूतिरित्यत्र वलोपवारणविचारः, सिद्धान्तज्योतिषे रंगनाथदैवज्ञस्यावदानम्, व्याकरणशास्त्रस्य वेदांगत्वम्, नाट्यशास्त्रे अभिनयतत्वविचारः ख्यातिवादनिरूपणमित्यादयः विदुषां मनांसि नियतं कवलीकरिष्यति में द्रढ़ीयान् विश्वासः इयं पत्रिका सदा दुर्लभपाण्डुलिपीनां रहस्यम् उद्घाटयति प्रकाशयति च । तत्वान्वेषण पराणामाचार्यणामालेखं प्रामुख्येन प्रचारं प्रसारं च करोति करिष्यति च।

परिणामतः पत्रिकेयं त्रयोदशवर्षाधिककालात् सारस्वतरंगस्थले नृत्यमाना विद्यते । मूलतः इयं पत्रिका प्रचारप्रसारहेतवे वर्तते ।

यतो हि चतुरस्रवैदुष्यलाभाय भारतविकासाय च संस्कृतस्य महद्योगदानमस्तीति न कश्चन संशयलेशः । एतदर्थं स्वनामधन्येन प्रधानमंत्रिणा नरेन्द्रमोदिमहाभागेन केन्द्राश्रिता संस्कृतभाषा कृता । अद्यत्वे सर्वेभारतीयाः संस्कृतप्रचारप्रसारवद्धपरिकराः सन्तिः। देशे विदेशे च अकारणमेव प्राणोत्सर्गं कुर्वन्ति, ये जनाः संस्कृतभाषां पठन्ति पाठयन्ति प्रचारयन्ति प्रसारयन्ति च न ते प्राणोत्सर्गमीहन्ते च । असूर्यानाम ते लोका अन्धेन तमसावृतेति ज्ञात्वा अयं निजः परोवेति गणना लघुचेतसाम्, माताच पार्वती देवी पिता देवो महेश्वरः बान्धवाः शिवभक्ताश्च स्वदेशे भुवनत्रयम् । स्वदेशं भुवनत्रयं मन्यमानाः संस्कृतज्ञाः विशिष्टपरम्परां स्थापयन्ति, एतदर्थं भारतस्य विकासे महद्योगदानं

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

संस्कृतम्। अपि च मृगै मृगाणां ग्रहणं पक्षिणां पक्षिभिर्यथा गजानां च गजैरेव ज्ञेयं ज्ञानेन गृह्यते। महर्षिवादरायणेन महाभारतशान्तपर्वणि 203/12 समुल्लिखितं वर्तते, प्रकृतमनुसरामि पत्रिकासंचालनमतीव कठिनं कार्यं वर्तते। किन्तु केषांचन राष्ट्रियान्ताराष्ट्रियविदुषां सहाय्यमवाप्य सारस्वते रंगस्थले सततं नृत्यमाना विराजते । समेभ्य विद्वद्भ्यः पत्रिकापरिवारेभ्यश्च दीर्घायुष्टववबलपुष्टिनैरूज्यप्राप्तिकामाय अनाथनाथं श्री विश्वनाथं सांजलिं प्रार्थये।

श्रुतिध्वनिमनोहरा मधुरसा शुभापावनी
स्मृताप्य तनुतापहृत समवगाह सौरव्यप्रदा।
निषेव्य पदपङ्कजा विवुधवृन्दमान्याऽमला
समस्तजगतीतले प्रवहतादियं जाह्नवी ।।

विदुषां दासानुदासः
झोपाख्यः डॉ॰ सदानन्दः

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024

Since 2009
ISSN- 0976-8645
UGC RN-41039

# प्रकाशकीयवक्तव्यम्

जाह्नवी ई शोधपत्रिका निरन्तरं सारस्वत्-साधकानां मनसि नरीनृत्य विश्वस्मिन् विश्वे लोकान् रञ्जयति अभिनवशोधनिमित्तं प्रेरयति च। पत्रिकायाः UGC CARE अपि च SCOPUS निमित्तं प्रयासोऽपि जायमानः वर्तते।

पत्रिकायाः पुरातनाङ्कस्य यथा सहजरूपे उपलब्धता स्यात् तथा अस्मात् अङ्कात् प्रक्रिया विधीयते। पत्रिकाद्वारा नैकविधसंस्कृतच्छात्रहितकार्याणि क्रियन्ते यथा हि- सङ्गणकीयसूक्ष्मेक्षिका, विश्वस्याः प्रथमान्तर्जालीयवेबफ़लकाश्रितायाः (अन्ताराष्ट्रीया वेबिनार) सङ्गोष्ठ्याः पञ्चमीशृङ्खला। एतत् सर्वं संस्कृतस्य इह विश्वपटले प्रचार-प्रसाराय वर्तते।

आयान्तु, वत्सा इव संस्कृतकपिलाम्प्रति पुनरपप्युन्मुखो भवाम। तदैव वयम्भारतीयास्संस्कृत-मातुर्दिव्यपयसा पुन पुष्टम्भारतम्परमवैभवम्प्रापयन्तो विश्व-कल्याणं सिसाधयिष्याम:।

सादरम्

श्रैमत्कः

डा. बिपिन कुमार झा

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024

Since 2009
ISSN- 0976-8645
UGC RN-41039

# गव्यूतिः इत्यत्र वलोपवारणविचारः

प्रो जी एस् वी दत्तात्रेयमूर्तिः[1]

**प्रमुखशब्दाः-** गव्यूतिः, वलोपः,लोपः, विभक्तिः, लोपः, प्रश्लेषः.सिद्धान्तकौमुदी.

**शोधसारः-** गवां यूतिः इति विग्रहे गो यूति इति स्थिते छन्दसि **गोर्यूतौ छन्दस्युपसंख्यानम्**[2] इति वार्तिकेन गोशब्दघटक ओकारस्य अवादेशे गव्यूतिः इति रूपम्। गव्यूतिः नाम गोप्रचारभूमिः। एवं लोकेपि अध्वपरिमाणे गम्यमाने **अध्वपरिमाणे च**[3] इति वार्तिकेन अवादेशे गव्यूतिः इति रूपम्। गव्+यूतिः इति स्थिते अन्तर्वर्तिनीं विभक्तिमाश्रित्य गव् इत्यस्य पदत्वात् अवर्णपूर्वकस्य पदान्तवकारस्य यूतिशब्दे परे यकाररूपहल्परत्वात् **हलि सर्वेषाम्**[4] इति सूत्रेण लोपः कुतो न। यदि हलि सर्वेषाम् इत्यत्र यकारमात्रमनुवर्तते न वकारः इत्युच्यते तदानीमपि यकाररूपाश्परकत्वात् **लोपश्शाकल्यस्य**[5] इति सूत्रेण वकारलोपे गयूतिः इति अनिष्टरूपापत्तिः खलु इति। **वान्तो यि प्रत्यये**[6] इत्यत्र वान्त इत्यत्र वकारात्, गोर्यूतौ छन्दस्युपसंख्यानम् इत्यत्र छकाराद्वा पूर्वभागे **लोपो व्योर्वलि**[7] इति लोपेन वकारः प्रश्लिष्यते। तेन श्रूयमाणवकारान्तादेशः स्यात्। वकारः न लुप्यते इति यवत् इति समाधानमुक्तं सिद्धान्तकौमुद्याम्[8]।

=====================================

**अत्र दीक्षिताशयः-**वान्तो यि प्रत्यये इति सूत्रे वकारात्पूर्वतया पाणिनिमहर्षिणा अन्यः वकारः निर्दिष्टः व् वान्तः इति। स च वल्परकत्वात् लोपोव्योर्वलि इति

---

[1]Department of Vyakarana, Shri Jagannath Sanskrit University, Shrivihar,Puri.
[2] (वार्तिकम, सिद्धान्तकौमुदी,पृ-76)
[3] (वार्तिकम, सिद्धान्तकौमुदी,पृ-76)
[4] भोभगोअघोपूर्वस्य लघ्वलघूच्चारणस्य यकारस्य लोपः स्याद्यदलि सर्वेषां मतेन इति सूत्रार्थः। (8-3-22,अष्टाध्यायी)
[5] अवर्णपूर्वयोः पदान्तयोर्यवयोर्वा लोपोशि परे इति सूत्रार्थः। (8-3-17,अष्टाध्यायी)
[6] यकारादौ प्रत्यये परे ओदौतोरव् आव् एतौ स्तः इति सूत्रार्थः। (6-1-79, अष्टाध्यायी)
[7] वकारयकारयोर्लोपः स्याद्वलि परे इति सूत्रार्थः। ( 6-1-66, अष्टाध्यायी)
[8] बालमनोरमा-तत्वबोधनी सहिता सिद्धान्तकौमुदी, पृ-77

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

सूत्रेण लुप्तः। तथापि वाक्यार्थवेलायां तं प्रश्लिष्य, सः वान्त इत्यस्य विशेषणं क्रियते। तदन्तविधौ वान्तः वान्तादेशः स्यात् इत्यर्थः सिध्यति। वान्तादेशे वान्तत्वाव्यभिचारात् वकारप्रश्लेषः व्यर्थः सन् सर्वदा श्रूयमाणवान्तादेशः स्यात् इति बोधयति। एतादृश वान्तत्वविशेषणः वान्तशब्दः गोर्यूतावित्यादि वार्तिके, अध्वपरिमाणे च इति वार्तिके चानुवर्तते। तथा च छन्दसि यूतिशब्दाव्यवहितपूर्वस्य गोशब्दस्य वान्तः वान्तादेशः स्यात् इत्यादिरीत्या वार्तिकार्थः सिध्यति। अतः गव्यूतिरित्यत्र वकारस्य लोपे कृते वकारप्रश्लेषः व्यर्थस्स्यादिति मत्वा लोपश्शाकल्यस्य इति सूत्रेण नात्र वलोपः। लोपोव्यर्वलि इति सूत्रे वकारस्य भाष्ये प्रत्याख्यातत्वात् **व् वान्तः, व् छन्दसि** इति निर्देशे लोपोव्योर्वलि इति सूत्रेण लोपः न सम्भवति । अतः सूत्रे वार्तिके वकारप्रश्लेषः न युक्तः खलु इति नाशङ्कनीयम्। कुत इति चेत् तत्र वकारप्रत्याख्यानं लौकिकोदाहरणाभावमात्रतात्पर्यकमेव। छन्दसि आस्रेमाणम् जीरदानुः इत्यत्र वलोपार्थः लोपो व्योर्वति इत्यत्र वकारस्य आवश्यकत्वात्। **छन्दोवत्सूत्राणि भवन्ति** इति भाष्योक्त्या सूत्राणामपि छन्दस्त्वातिदेशात् वा वान्त इत्यादि सौत्रप्रयोगेषु वलोपः सुसाध एव। **अतो ल्रान्तस्य**[9] इत्यत्र लुप्तनिर्दिष्टः वकारः इति इको गुणवृद्धी इति सूत्रभाष्यप्रामाण्यात् लोपोव्योर्वलि इत्यत्र वलोपप्रत्याख्यानभाष्यस्य एकदेश्युक्तित्वस्य अवश्याङ्गीकार्यत्वाच्च। तस्मात् गव्यूतिः इत्यत्र वलोपवारणाय वान्तः इत्यत्र वकारात्, गौर्यूतौ इत्यत्र छकाराद्वा पूर्वभागे वकारप्रश्लेषः कर्तव्यः इति। यदि वान्तो यि प्रत्यये इत्यादि सूत्रोदाहरणभूतेषु गव्यम्, लाव्यम् इत्यादिषु प्रत्ययप्राग्वर्तिनः अपदत्वात् तत्र वलोपप्रसक्तिः नास्ति। अतस्तत्र वकारप्रश्लेषः व्यर्थः इति चिन्त्यते, तदा गोर्यूतौ इत्यादि वार्तिके छकारात्पूर्वं वकारः प्रश्लिष्यते। तेन गव्यूतिरिति इष्टसिद्धिः भवति।

**अत्र लघुशब्देन्दुशेखरकाराणामाशयः**[10]

वान्तो यि प्रत्यये, गोर्यूतावित्यादि वार्तिके च वकारप्रश्लेषः न युक्तः, लोपोव्योर्वलि इति सूत्रे वकारस्य भाष्ये प्रत्याख्यातत्वेन तत्र वलोपस्य असम्भवात्। अतो ल्रान्तस्य इत्यत्र लुप्तनिर्दिष्टः वकारः इति इको गुणवृद्धी इति एकदेशिभाष्यम्, न तु वलोपप्रत्याख्यानभाष्यम्। अतः छन्दसि गव्यूतिशब्दे

---

[9] अतः समीपौ यौ ल्रौ तदन्तस्याङ्गस्यातो वृद्धिः स्यात्परस्मैपदपरे सिचि इति सूत्रार्थः।(7-2-2,अष्टाध्यायी)

[10] गुरुप्रसादसहितः लघुशब्देन्दुशेखरः, पृ.संख्या-344

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

वलोपस्तु छन्दसि सर्वविधीनां व्यवस्थितविभाषामाश्रित्यैव वारणीयः। अध्वपरिमाणार्थके लौकिके गव्यूतिशब्दे वलोपप्रसक्तिः न भवति। तथाहि- सणत्वेन संज्ञायां गम्यमानायां पूर्पदस्थत्वात् रेफषकाररूपात् निमित्तात् परस्य नस्य णत्वं स्यात् इत्यर्थकेन **पूर्वपदात्संज्ञायामगः**[11] इति सूत्रेण रघुनाथादिशब्देषु संज्ञात्वभङ्गापत्या णत्वं यथा न भवति, तथा अध्वपरिमाणार्थकस्य गव्यूतिशब्दस्य संज्ञाशब्दत्वात् तत्र संज्ञात्वभङ्गापत्या लोपश्शाकल्यस्य इति वलोपः न भवति। एवं छान्दसे गव्यूतिशब्दे छन्दसि सर्विविधीनां वैकल्पिकत्वेन, लौकिके संज्ञात्वभङ्गापत्या च वलोपवारणे सिद्धे तदर्थं वान्तो यि प्रत्यये इत्यत्र वकारप्रश्लेषः नावश्यकः इति।

**अत्र केचित्**

लोपो व्योर्वलि इति सूत्रे वकारप्रत्याख्यनभाष्यमेव एकदेश्युक्तिः। अतोल्लान्तस्य इत्यत्र लुप्तनिर्दिष्टः वकारः इति इको गुणवृद्धी इतिसूत्रभाष्यप्रामाण्यात्[12]। अत एव प्रौढमनोरमायां[13] न पदान्ते त्यादि सूत्रे पदान्तस्य स्थाने विधौ इत्यर्थे वृक्षव् इत्यत्र लोपोव्योर्वलि इति सूत्रेण वलोपः आपादितः दीक्षितेन। लण्सूत्रभाष्यप्रदीपे[14] वृक्षव् इत्यत्र क्विब्निमित्तकतया लोपो व्योर्वलि इति लोपप्रसङ्गः इत्युक्तं कैयटेन। लोपश्शाकल्यस्य इत्यत्र अश् ग्रहणप्रयोजननिरूपणावसरे वृक्षव् करोति इत्यत्र विज्निमित्तकः वलोपः आशङ्कितः नागेशेन। अत एव-

**सुधे सुधेवारिवधात्सुराणां, सुकारणे लाघवतश्च रामः।**
**विशेषणे द्वे य इहादिकर्तुः, वदेदधीती स हि कैयटीये।।** इति अभियुक्तोक्तिः सङ्गच्छते।

अत्र सुधे इति सुपूर्वकात् धिवि प्रीणने इति धातोः इदित्वान्नुमि, अन्येभ्योपि दृश्यते इति सूत्रेण विचि, तस्य सर्वस्यापि लोपे, लोपो व्योर्वलि इति

---

[11] पूर्वपदस्थान्निमित्तात्परस्य नस्य णः स्यात्समज्ञायं न तु गकारव्ववधाने इति सूत्रार्थः।(8-4-3, अष्टाध्यायी)

[12] इत्थं हि तत्रत्यं भाष्यम्- ल्लान्तस्य इत्युच्यते, नेदं ल्लान्तम्। ल्लान्तस्य इत्यत्र वकारोपि निर्दिश्यते। किं वकारो न श्रूयते। लुप्तनिर्दिष्टो वकारः इति। उद्योतपरिवृतप्रदीपप्रकाशितमहाभाष्यम्, पृ-196.

[13] सटीकटिप्पणशब्दरत्नप्रौढमनोरमा,पृ-162,163.

[14] उद्योतपरिवृतप्रदीपप्रकाशितमहाभाष्यम्, पृ-143.

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

सूत्रेण विज्निमित्तकतया धि न् व् इत्यत्र वलोपे, सुधिन् इत्यत्र लघूपधगुणे सुधेन् इति जाते प्रातिपदिकत्वात् सुप्रत्यये, तस्य हल्ङ्यादिलोपे, नलोपे च कृते सुधे इति रूपं निष्पन्नम्। एवमेव सुपूर्वकात् कृवि हिंसाकरणयोः इति धातोः नुमि, विचि वलोपे सु कृन् इति जाते धातोः ऋकारस्य गुणे अरे इत्यादेशे सु कर् न् इति जाते प्रातिपदिकत्वात् सुप्रत्यये, तल्लपे, नलोपे सुकर् इति जाते रेफस्य विसर्गे सुकः इति रूपं भवति। अस्य रणे इत्यनेन सह सन्धौ सुकारणे इति भवति। सूक्ष्मदृष्ट्या परिशील्यमाने लोपो व्योर्वलि इत्यत्र वलोपः प्रत्याख्यायते तदा पूर्वोक्तसकलग्रन्थानां, सुधे इत्यादि प्रयोगाणाञ्च असाङ्गत्यं स्यात्।

किञ्च **च्छ्वोश्शूडनुनासिके च**[15] इति सूत्रभाष्य[16]विरोधश्च। तथाहि- तत्र सूत्रे विधेयः ऊठ् इत्येव किं स्वीक्रियते। ऊट् एव विधीयताम्। स च टित्वात् वस्य अद्यवयवः भवति। अङ्गत्वनिमित्ते अनुनासिकादौ प्रत्यये, क्वौ झलादौ प्रत्यये च परतः वकारस्य ऊट् आगमः स्यात् इति प्रकृतसूत्रार्थः भवति। अक्षदिव् इत्यत्र वकार्तपूर्वतया प्रकृतसूत्रेण ऊडागमे, क्विब्निमित्तकतया वलोपे यणादेशे अक्षद्यूः इति च सिध्यति। तत्किमर्थं ठित्वमादेशत्वञ्च स्वीकार्यम्। इत्यभिप्रायेण **ऊट् आदिः कस्मान्न भवति। आदिः टित् भवतीति प्राप्नोति। कस्य पुनरादिः, वकारस्य। अस्तु। वकारस्य का प्रसक्तिः। लोपो व्योर्वलि इति लोपो भविष्यति** इत्युक्तं भाष्ये। ततः ऊट् इति छित्वा तस्य आगमत्वस्वीकारे, तस्यैव ज्वरत्वरे त्याद्युत्तरसूत्रे अनुवर्तनात् तत्रान्त्यस्य, उपधायाश्च पूर्वतया द्वयोः ऊटोः प्रवृत्तौ ज्वार-ज्-ऊव्-ऊर् इत्यत्र वलोपासम्भवेन जूः तूः इत्यादि रूपाणि न सिध्यन्ति इत्यभिप्रायेण **नैवं शक्यं ज्वरत्वर....इति द्वौ ऊटौ स्याताम्। एवं तर्हि नैव टित्। कस्तर्हि ठित् इति च उक्तम्।** यदि लोपो व्योर्वलि इति सूत्रे वलोपः प्रत्याख्यातः तदा अक्षदि ऊव्- अक्षद्यूः इति सूत्रे वलोपासम्भवेन ऊठः आदेशत्वफलस्य च्छ्वोः इति सूत्रे एव सम्भवात् ज्वरत्वर ...इति सूत्रपर्यन्तमनुधाव्य तत्र ऊठः आदेशत्वकल्पनं भाष्यकारस्य असङ्गतं स्यात्। अपि च च्छ्वोरिति सूत्रे किङित् ग्रहणानुवृत्तौ दिव् धातोः यङ्लुङन्तात् लटि तिपि देदिव् ति इति स्थिते वलोपे देदेति, अननुवृत्तौ देदिव् ति इति स्थिते वकारस्य ऊठि यणादेशे गुणे च कृते देद्योति इति रूपभेदः कैयटेन प्रदर्शितः। वकारप्रत्याख्याने तु देदेति इति कैयटोक्तिः असङ्गता स्यात्।

[15] सतुक्कस्य छस्य वस्य च क्रमच्छ ऊठ् एतावादेशौ स्तः अनुनासिके क्वौ झलादौ किङ्गिति च इति सूत्रार्थः।(6-4-19 अष्टाध्यायी)

[16] उद्योतपरिवृतप्रदीपप्रकाशितमहाभाष्यम्,6-4-19, पृ-282-283.

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

तस्मात् वलोपप्रत्याख्यानभाष्यम् एकदेश्युक्तिरेव तथा च वान्त इत्यादौ वकारप्रश्लेषे तस्य लोपे व्योरिति लोपः सुलभ एव। छन्दसि सर्वविधीनां वैकल्पिकत्वमाश्रित्य गव्यूतिरित्यत्र वलोपवारणन्तु अगतिकतिरेव। लोके अध्वपरिमाणार्थके गव्यूतिशब्दे संज्ञात्वभङ्गभिया वलोपः न भवतीत्यपि न समीचीनम्, पूर्वपदात्संज्ञायामगः इति सूत्रे अध्वपरिमाणे च इति वार्तिके लोपश्शाकल्यस्य इति सूत्रे वा संज्ञापदाभावात्। किञ्च सवकारेण अध्वपरिमाणे गम्यमाने वान्तादेशः इत्यर्थश्च न सिध्यति तद्वार्तिकस्य।

पूर्वपदात्संज्ञायामगः इत्यस्यापि सणत्वेन संज्ञायामित्यद्यर्थः न युक्तः। तथा सति विष्वक्सेनः इत्यत्रापि संज्ञात्वभङ्गापत्यैव णत्ववारणे सिद्धे तदर्थं सूत्रे अग इत्यस्य वैयर्थ्यापत्तेः। रघुनाथ इत्यत्र तु क्षुभ्नादित्वात् न तत्। एवञ्च पूर्वपदादित्यस्य साम्येन अध्वपरिमाणे च इति वार्तिकस्य सवकारेण अध्वपरिमाणे गम्ये वान्तादेशः इत्यर्थकथनमसङ्गतमेव। अतः लौके वेदे वा गव्यूतिरित्यत्र लोपवारणार्थं वान्त इत्यत्र वकारात्, गोर्यूतावित्यत्र छकाराद्वा पूर्वं वकारप्रश्लेषः आवश्यक एव इति केचित्।

**पूर्वोक्त केचिन्मतपरिशीलनम्पूर्वोक्तदोषाणां वरणञ्च**

लोपो व्योर्वलि इति सूत्रभाष्ये[17] **अनारम्भो वा पुनर्वलोपस्य न्याय्यः। कथम् आस्रेमाणम्, जीरदानुः इति। आस्रेमाणम्, जीरदानुः इत् छान्दसत्वात् वर्णलोपात् सिद्धम्** इत्यादिना वलोपः प्रत्याख्यातः। तद्भाष्यस्य विना विरोधमेकदेस्युक्तित्वकल्पनमयुक्तम्। अतो ल्वान्तस्य इत्यत्र लुप्तनिर्दिष्टः वकारः इति इको गुणवृद्धी इति सूत्रभाष्यमेव एकदेश्युक्तिः। तथाहि-अलावीत् इत्यत्र अलू-इस्-ईत् इत्यवस्थायां परस्मैपदपरसिज्निमित्तकवृध्यपेक्षया सिज्मात्रनिमित्तकत्वेन अन्तरङ्गत्वाद्धातोः गुणे ओकारे, तस्य अवादेशे च अलव्-इस्-ईत् इति जाते इगन्ताङ्गत्वाभावात् सिचि वृद्धिः परस्मैपदेषु इति सूत्रेण वृद्धिः न प्राप्नोति। हलन्तलक्षणा च वृद्धिः नेटि इत्यनेन निषिद्धा। ततश्च इष्टरूपसिद्धिः न स्यादित्यभिप्राये एकदेशिना प्रकटिते **मा** भूदेवम्, ल्वान्तस्य इत्येवं भविष्यति। ल्वान्तस्य इत्युच्यते न चेदं ल्वान्तम्। ल्वान्तस्य इत्यत्र वकारोपि निर्दिश्यते। किं वकारो न श्रूयते। लुप्तनिर्दिष्टो वकारः इति परेण एकदेशिना उक्तम्।

[17] उद्योतपरिवृतप्रदीपप्रकाशितमहाभाष्यम्,6-1-66,पृ-66.

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

अर्थात् अतो ल्रान्तस्य इत्यस्य अतः समीपस्थाः ये वकारलकाररेफाः तदन्ताङ्गस्य अतः वृद्धिः स्यात् परस्मैपदपरे सिचि परे इत्यर्थः सिध्यति। अलव् इस् ईत् इत्यत्र वकारान्ताङ्गत्वात् अतो ल्रान्तस्य इति सूत्रेण वृद्धौ इष्टरूपं सिध्यतीति भावः। परन्तु अत्र सिचि वृद्धिः परस्मैपदेषु इति वृध्यपेक्षया गुणस्य अन्तरङ्गत्वेपि तस्याः वृद्धेः गुणापवादत्वमस्ति। चि,लु,कृ इत्यादीगन्तधातुस्थले सर्वत्र गुणे नाप्राप्ते वृद्धेः विधीयमानत्वात्। वृद्धेः गुणापवादत्वादेव उत्तरभाष्ये न सिच्यन्तरङ्गमस्ति इत्युक्तम्।

एवं सर्वतः प्रबले अपवादत्वे वृद्धेः जाग्रति तदनास्थाय दुर्बलमन्तरङ्गत्वमादाय गुणप्रवृत्यङ्गीकारात् अतोल्रान्तस्य इत्यत्र लुप्तनिर्दिष्टो वकारः इति भाष्यस्य एकदेश्युक्तित्वमङ्गीकार्यमेव।प्रकरणान्तरस्थितेन अनेन एकदेशिभाष्येण लोपो व्योर्वलि इति सूत्रस्थस्य सिद्धान्तभूतस्य वकारप्रत्याख्यानभाष्यस्य एकदेश्यक्तित्वकल्पनमनुचितमेव। **न हि पदान्ताः परेणः सन्ति**[18] इति लण्सूत्रभाष्यप्रामाण्येन वृक्षव् प्रभृतीनामनभिधानस्य अवश्याङ्गीकार्यत्वात्, वृक्षव् इत्यत्र वलोपापादपराः अयुक्ता एवेति केचित्। लोपश्शाकल्यस्य इत्यत्र अश्पदप्रयोजनविचारे वृक्षव् करोति इत्यत्र विज्निमित्तकवलोपशङ्कासमाधानयोः प्राचीनमतानुसारित्वात् नागेशमतमेव समीचीनम्। पूर्वोक्ताभियुक्तप्रयोगस्य स हि कैयटीये इति वाक्यशेषात् कैयटानुरोधितया तद्विरोधः अकिञ्चित्करः। च्छ्वोरिति सूत्रभाष्यमपि वलोपप्रत्याख्यानभाष्यस्य न एकदेश्युक्तित्वसाधकम्। लोपो व्योर्वलि इति सूत्रे वग्रहणं कुर्वतः सूत्रकृतोपि मते ऊठः आदेशत्वफलप्रदर्शनाय ज्वरत्वर...इत्याद्युत्तरसूत्रपर्यन्तानुधावनं भाष्यकृता कृतमिति वक्तुं शक्यत्वेन तावता प्रत्याख्यानभाष्यस्य एकदेश्युक्तित्वकल्पनायाः अनौचित्यात्। **यकारवकारान्तानां च्छ्वोरिति ऊठ्भाविनां यङ्लक्नास्ति**[19] इति कैयटेन स्पष्टमुक्ततया लोपो व्योर्वलि इत्यत्र वग्रहणस्य देदेति इति फलमपि न सम्भवति। अतः लोपो व्यर्वलि इति सूत्रे वकारप्रत्याख्यानभाष्यं सिद्धान्त्युक्तिरेव। वान्त इत्यत्र वकारात् गोर्यूतौ इत्यत्र छकाराद्वा पूर्वं वकारस्य लोपासम्भवेन तत्र वकारप्रश्लेषः अनुचितः। अतः छान्दसे गव्यूतिशब्दे वलोपाभावः छान्दस्त्वादेव। छन्दस्त्वात् वलोपाभावसाधनमगतिकगतिः इति न भ्रमितव्यम्। छन्दसि दृष्टानां सुब्व्यत्यय-तिङ्व्यत्यय-वर्णव्यत्यय-लिङ्गव्यत्ययादीनां सर्वेषां

[18] उद्योतपरिवृतप्रदीपप्रकाशितमहाभाष्यम्,पृ-141.
[19] उद्योतपरिवृतप्रदीपप्रकाशितमहाभाष्यम्,6-4-19, पृ-284.

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

गतिकल्पनार्थमेव **षष्ठीयुक्तः छन्दसि** इति सूत्रे वा इति योगं विभज्य तेन **सर्वे विधयः छन्दसि विकल्प्यन्ते** इति वचनस्य भाष्यकारेण साधितत्वात्।

एवं लौकिके अध्वपरिमाणार्थके गव्यूतिशब्देपि न वलोपप्रसङ्गः। एवं पूर्वपदात्संज्ञायमगः इत्यत्रापि पूर्वोक्तभाष्यप्रामाण्यात् पूर्वपदस्थान्निमित्तात् परस्य नस्य णत्वं स्यात् तद्घटितेन चेत् संज्ञा गम्यते इत्यर्थ एव वक्तव्यः। अणृगयनादिभ्यः इति सूत्रे ऋगयनशब्दे णत्वाभावनिपातनात् तत्र णत्ववारणार्थम् अग इथि नावश्यकमिति प्रत्याख्यातम्। तस्याप्ययमेवाशयः ऊह्यः यत् पूर्वपदात्संज्ञायामित्यस्य सणत्वेन संज्ञायां गम्यमानायामित्याद्यर्थ एव वक्तव्यः, तत्र स्वत एव णत्वे अप्राप्ते तद्वारणाय पुनः सूत्रे अग इति न वक्ताव्यम् इति। अतः अगः इत्यस्य वैयर्थ्यापत्या पूर्वोक्तरीत्या अर्थवर्णनमयुक्तमिति यत् तदेवायुक्तम्। किञ्च भृञोसंज्ञायाम् इति सूत्रभाष्यप्रामाण्येन पूर्वपदात्संज्ञायामगः इत्यस्य पूर्वोक्तार्थे निर्णीते, यथोत्तरं मुनीनां प्रामाण्येन अग इति सूत्रप्रयोगविरोधस्य अकिञ्चित्करत्वात्। अग इति पदं पूर्वोक्तार्थे तात्पर्यग्राहकमित्यङ्गीकारे अदोषाच्च। एवमर्थकरणेन रघुनाथादिशब्देषु स्वत एव णत्वाप्राप्त्या इष्टसिद्धौ तदर्थं क्षुभ्नादित्वकल्पनस्य अयुक्तत्वाच्च। अतः पूर्वपदात्संज्ञायामगः इत्यत्रेव अध्वपरिमाणे च इति वार्तिकस्यापि सवकारेण अध्वपरिमाणे गम्ये इत्यद्यर्थस्यैव वक्तव्यतया, वकाररहितेन गव्यूतिशब्देन अध्वपरिमाणाप्रतीत्या तत्र न वलोपः इति सिद्धम्।

**निगमनम्**

- लोपो व्योर्वलि इति सूत्रे वकारप्रत्याख्यानभाष्यं सिद्धान्त्युक्तिरेव।
- अतः वान्त इत्यत्र वकारात्, गोर्यूतौ इत्यत्र छकाराद्वा पूर्वभागे वकारप्रश्लेषः अनुचितः, तस्य लोपासम्भवात्।
- छान्दसे गव्यूतिशब्दे सर्वे विधयः छन्दसि विकल्प्यन्ते इति नियमाल्लोपाभावः।
- अध्वपरिमाणार्थके गव्यूतिशब्दे तु संज्ञात्वभङ्गापत्या वलोपाभावः।

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

एवमेव छन्दसि गव्यूतिशब्दे अन्यार्थमावश्यकेन **सर्वे विधयः छन्दसि विकल्प्यन्ते** इति वचनेन, लौकिके गव्यूतिशब्दे संज्ञात्वभङ्गापत्या च वलोपवारणे सिद्धे तदर्थं सूत्रे वार्तिके वा वकारप्रश्लेषः अनावश्यकः इति शम्।

## परिशीलितग्रन्थसूची

1.वैयाकरणसिद्धान्तकौमुदी(बालमनोरमा-तत्वबोधिनीसहिता) प्रथमो भागः, मोतीलाल बनारसीदास.1982
2.लघुशब्देन्दुशेखरः(गुरुप्रसादसहितः) आन्ध्रविश्वकलापरिषद्, विशाखपट्टणम्। 1970
3.लघुशब्देन्दुशेखरः(चन्द्रकलासहितः) जयकृष्णदास-हरिदासगुप्तः, बनारस सिटी,1983.
4.महाभाष्यम्(उद्योतपरिवृतदीपप्रकाशितमहाभाष्यम्) चौखाम्बा संस्कृतप्रतिष्ठान, दिल्ली.1990
5.काशिकावृत्तिः न्यासापरपर्यायकारिकाविवरणपक्किकया, पदमञ्जरीव्याख्यया च सहिता, प्राच्य भारत प्रकाशन, वारणासी,1965.
6.प्रौढमनोरमा(सटीकटिप्पणशब्दरत्नसहिता)जयकृष्णदास हरिदास गुप्तः, चौखाम्बा संस्कृत सिरीज् आफीस्, बनारस सिटी.1939.

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

# सिद्धान्तज्योतिषे रङ्गनाथदैवज्ञस्यावदानम्

Anshul kumar Dubey[20]

**प्रमुखशब्दाः**-रङ्गनाथः,सिद्धान्तचूडामणिः, सिद्धान्तः, करणम्, मन्दफलम्, शीघ्रफलम्, ज्योतिषम्

**शोधसारः-** शोधेऽस्मिन रङनाथाचार्यस्य सिद्धान्तज्योतिषस्य योगदानें कि वैशिष्ट्यं तथा करणग्रन्थेष्वन्यतमो सिद्धान्तचूडामणिः आचार्येण अहर्गणसाधने चक्रं बिना मध्यमग्रहाणां साधनं कृतं तद् करणग्रन्थपरम्परातः भिन्नं वर्तते। अथ च ग्रहस्पष्टिकरणप्रक्रियायां शीघ्राङ्कानां मान्दाङ्कानां साधनं कृत्वा ग्रहाणां साधनं विहितम् तथा उक्तग्रन्थमतिरिच्य आचार्यस्य ग्रन्थः तथा आचार्यस्य कुलपरम्पराणां तथा तेषां कालविषये तथा सिद्धान्तचूडामणेः विषये संशयानां निराकरणं कृतम्।

==========================================

वेदशब्दः विद् ज्ञाने धातोः निष्पन्नः तस्यार्थः भवति शास्त्रज्ञानं,ज्ञानं वा सायणाचार्येण उच्यते"**इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति,स वेद**"इति तर्हि लौकिकोपायः कः? अथोच्यते-

**वेदास्तावद्यज्ञकर्मप्रवृत्ताः यज्ञाः प्रोक्तास्ते तु कालाश्रयेण।**
**शास्त्रादस्मात् कालबोधो यतः स्याद्वेदाङ्गत्वं तिषस्योक्तमस्मात्॥**[21]

यज्ञकर्मैव लौकिकोपायः , अतः यज्ञकर्माय समुचितकालस्यावश्यकता तस्यानयनाय ज्यौतिःशास्त्रम्।

एवमेव सांख्यकारिकायां ईश्वरकृष्णेन भणितः यत्

**दुःखत्रयाभिघाताद् जिज्ञासा तदपघातके हतौ।**
**दृष्टे साऽपार्था चेन्नैकान्तात्यन्ततोऽभावात्॥**[22]

अतः एकान्तिकात्यन्तिकोपायः कर्तव्यः तदोपायः ज्योतिःशास्त्रबिना असम्भवः। अतः किं ज्योतिःशास्त्रम् ?

---

[20] Research scholar, Gvuss Bonli Sawai Madhopur

[21] .9/मध्यमा., सि.शि.,चौखंबा संस्कृत संस्थान वाराणसी

[22] .1,साङ्ख्यकारिका ,चौखंबा संस्कृत संस्थान वाराणसी

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

द्युतेरिसन्नादेशश्चजः इत्युणादिससूत्रेण ज्वलितकर्मणो"द्युति"धातोः "इसन" प्रत्यये दकारस्य ज-कारदेशे गुणे कृते"ज्योतिः" इति पदस्य निष्पत्तिर्भवति। ज्योतिर्नाम स्वयं प्रकाशितग्रहनक्षत्रादयः। एवं ज्योतिः सूर्यादीनां ग्रहाणां गत्यादिकं प्रतिपाद्यतया अस्ति अस्य इति अच्-प्रत्यये "ज्योतिषम्" इति रूपसिद्धिः।[23] ज्योतिर्वेदाङ्गमपि स्कन्धत्रये विभक्तं यथा-

**त्रिस्कन्धज्योतिषं शास्त्रं चतुरलक्षमुदाहृतम्।**
**गणितं जातकं विप्र! संहितास्कन्धसंज्ञितम्।।**[24]

अतः त्रिस्कन्धात्मके ज्योतिषशास्त्रे सिद्धान्तस्कन्धः, जातकस्कन्धः, संहितास्कन्धः इति , तेषु सिद्धान्तस्कन्धे प्रकारत्रयं विद्यते सिद्धान्तः- यत्र सृष्ट्यादितः ग्रहाणां गतेःविचारः, द्वितीयोऽस्ति तन्त्रम्-कलियुगादितःग्रहाणां स्पष्टीकरणं यत्र विधीयते। तृतीयोऽस्ति करणम्- अभीष्टशकादितः यत्र ग्रहाणां ग्रहगणितद्वारा स्पष्टीकरणं विद्यते।

जातकस्कन्धे जातकस्य व्यष्टिगतफलस्यविचारणा विद्यते किन्त्वत्र शब्दार्थविचिकित्सापि विद्यते यथा जातकशब्देन बौद्धधर्मस्य पिट्केषु बौद्धकथानां संग्रहः एवमेव रूपेण जातककथा नाम्ना चर्च्यते किन्तु जातकशब्दस्य व्युत्पत्तिः**जातं जन्म तदधिकृत्य कृतो ग्रन्थः**[25] अतः जातबालकस्य शुभाशुभनिर्णायकग्रन्थः तज्जातकम् यथा- बृहज्जातकम् जातकालङ्कारः,जातककौमुदी,जातकसारः जातकामृतम् इत्यादयः।

संहिता स्कन्धः-

**संहिताशास्त्ररूपं च ग्रहचारोब्दलक्षणम्।**
**तिथिवासरनक्षत्रयोगतिथ्यरधसंज्ञकाः।।**
**मुहूर्तोपग्रहाः सूर्यसंक्रान्तिगोचरः क्रमात्।**
**चन्द्रताराबलं चैव सर्वलग्नातिवाह्वयः।।**
**आधानपुंससीमन्तजातकानामभुक्तयः।**
**चौलंकर्णाच्छिदा मौञ्जी क्षुरिकाबन्धनं तथा।।**
**समावर्तनवैवाहप्रतिष्ठासद्मलक्षणम्।**
**उत्पत्तिलक्षणं चैव संक्षेपतो ब्रुवे।।**[26]

---

[23] 572 पृ. संस्कृतवाङमयान्तःप्रवेशिका,डा.सोमनाथदाशः,चौखंबा संस्कृत प्रतिष्ठान जवाहरनागर,नवदेहली
[24] .ना.पु.पूर्वभागः-2/54/2
[25] .शब्दकल्पद्रुम APPs
[26] .2/54/7-11 नारदपुराणम्

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

संहितास्कन्धे विविध विषयाणां यथा भूकम्पवृक्षायुर्वेदग्रहाणांचारादीनां विमर्शः भवति ,तस्य शास्त्रस्य विश्रुतग्रन्थः वाराहीसंहिता/बृहत्संहिता । तथा अत्र वयं त्रिस्कन्धेषु सिद्धान्तस्कन्धे विचारयामः। उपरि सिद्धान्तस्य या परिभाषा उद्घाटिता तस्याः व्यासत्वं भास्करणोद्घाटितम्-

**त्रुट्यादिप्रलयान्तकालकलना मानप्रभेदः क्रमाच्चारश्च द्युसदां द्विधा च गणितं प्रश्नास्तथा सोत्तराः।**
**भूधिष्ण्यग्रहसंस्थितेश्च कथनं यन्त्रादि यत्रोच्यते ,सिद्धान्तः स उदाहृतोऽत्र गणितस्कन्धप्रबन्धे बुधैः।।**[27]

सिद्धान्तस्कन्धे विविधाचार्यैः स्व-स्व क्षेमुष्या सिद्धान्तग्रन्थाः विरचिताः,करणग्रन्थाः विरचिताः तन्त्रग्रन्थाः विरचिताश्च ।पूर्वं तु अष्टादशाचार्याणां अष्टादशसिद्धान्ताः आसन् परं सम्प्रति पञ्चसिद्धान्ताः जगद्योतिताः ते सन्ति

**पौलिशरोमकवाशिष्ठसौरपितामहास्तु पञ्चसिद्धान्ताः।**
**पञ्चभ्यो द्वावाद्यौ व्याख्यातौ लाटदेवेन।।**[28]

अग्रे कथयति-

**पोलिशकृतः स्फुटोऽसौ तस्यासन्नस्तु रोमकः प्रोक्तः ।**
**स्पष्टतरः सावित्रः परिशेषौ दूरविभ्रष्टौ।।**[29]

**अतः पञ्चसिद्धान्तेषु स्पष्टतरः सावित्रः (सूर्यः)इत्युक्ते दृकसिद्धः/दृग्गणितैक्यम्**

किन्तु सूर्यसिद्धान्तस्य पृथकग्रन्थोपलभ्यते , एकः पञ्चसिद्धान्तिकागत-सूर्यसिद्धान्तः । तत्र गृहाणां शरः तथा सम्प्रति प्रचलितसूर्यसिद्धान्ते शरमानं पृथक्तया प्राप्यते ,उपर्युक्त-मानानां विकासः शनैः शनैः जातम्,सम्प्रति ब्राह्ममानानुसारेण , आर्यमानानुसारेण , सौरमानानुसारेण पञ्चाङ्गानां निर्माणं जायते इति बालकृष्णदीक्षितश्रीमतां मतम्[30] अतः विविधसिद्धान्तेषु सौरसिद्धान्तस्य स्पष्टता कारणात् अस्यपरम्परा वहुविस्तृता वर्तते । परम्परायां ग्रहलाघवं,मकरन्दसारणी वार्षिकतन्त्रम् , ज्योतिषदर्पणः , रामविनोदः,सिद्धान्तचूडामणिः आदयः ग्रन्थाः उपलभ्यन्ते ।तेषु सिद्धान्तचूडामणिः अन्यतमः ,तस्य कर्त्ता दैवज्ञरङ्गनाथचार्यः,अत्रायमपि ध्यातव्यं यत्

---

[27] .6 श्लो. मध्यमाधिकारः सिद्धान्तशिरोमणिः
[28] .66, भारतीयज्योतिशास्त्रय्येतिहासः,लोकमणिदहाल,चौखंबा सुरभारती प्रकाशन वाराणसी
[29] तत्रैव.
[30] .भारतीयज्योतिष,उत्तरप्रदेश हिन्दी संस्थान,हजरतगंज लखनऊ

Since 2009
ISSN- 0976-8645
UGC RN-41039

ज्योतिर्वेदाङ्गस्य विकासे रङ्गनाथनाम्ना आचार्यद्वयं प्राप्यते एकः सूर्यसिद्धान्तस्य गूढार्थप्रकाशिकायाः लेखकः यस्य कालः1525 शकाब्दः वर्तते , गूढार्थप्रकाशिकायाः लेखनं काश्यां कृतमिति[31]।

**दैवज्ञरङ्गनाथाचार्यः**

द्वितीयो रङ्गनाथः वर्तते यः अस्मिन शोधपत्रे विचारणीयः,तेषां विषये ज्योतिषशास्त्रस्येतिहासे भणितः अयं नृसिंहदैवज्ञस्य कनिष्ठतनयः , यः 1540 शकाब्दे जातः [32]आचार्याणां विषये शङ्करबालकृष्णः आचष्टे यदयं गोलग्रामवास्तव्यःतथा च गोलग्रामविश्रुतकुलीयःअथ च अस्य वंशे सर्वे विद्वान्सः आसन् । किन्तु अयं अस्य वंशे कनिष्ठ आसीदत एवास्य सर्वभ्रातृणामुल्लेखो ग्रन्थान्ते ललितपद्यैः अवलोक्यते। यथा-

**गोलज्ञविद्वदयुतगोलनाम्नि ग्रामे गुणौघैः प्रथितो बभूव।**
**यथार्थनामा शिवलब्धधामा श्रीकृष्णनामा गणकोष्णधामा।।**

**तस्मादभूतां तनयौ तदाद्यः श्रीमन्नृसिंहो बुधसेविताङ्घ्रिः।**
**ज्योतिर्विदाचार्यपदं प्रयातः स्वधामसंतोषितसदद्विजौघः।।**

**मासानां कृतिराब्धिहृद्युतिरसौ खाब्जैर्विहीना तिथि-**
**र्बाणैहृद्द्विहतोडुवासरमितिर्वाराङ्गभागात् पदम्।**

**पक्षः सर्वयुतिः शको द्विखदिनैर्युक्ताऽत्र जानाति य-**
**स्तस्याऽव्यक्तविदो नितान्तमपरा दैवाकरी भारती[33]।।**

आचार्येण ग्रन्थान्ते स्वपरिचयःसुललितपद्यैः वर्णनं विहितः।
तत्र वंशपरम्परायाः विचारणा कृतः परंपरायां रामः(तैतित्तरीय शाखी भारद्वाजगोत्रोत्पन्नो महाराष्ट्रब्राह्मणः)

[31] .391, भारतीयज्योतिष,उत्तरप्रदेश हिन्दी संस्थान,हजरतगंज लखनऊ,
[32] . ज्योतिषशास्त्रस्येतिहास,लोकमणिदाहालः, चौखंबा संस्कृत संस्थान वाराणसी
[33] 77,सिद्धान्तचूडामणिः,रङ्गनाथाचार्यः,सरस्वतीसुषमा,वाराणसी प्रकाशनवर्ष संवत 2014

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

भट्टाचार्यः
दिवाकरः

कृष्णः विष्णुः मल्लारिः केशवः विश्वनाथः

कृष्णस्य पुत्रौ नृसिंहदैवज्ञः तथा शिवः,अनन्तरं नृसिंहस्य चत्वारः पुत्राः दिवाकरः,कमलाकरः,गोपीनाथः रङ्गनाथः।

रङ्गनाथः तस्य जन्मः पूर्वोक्तः1540 शकाब्दे जातः। अस्य जन्मः 1534 (अनुमानेन)[34] अथ च आचार्यस्य वासः काश्यामिति सम्पादकेन अनुमीयते।

**रङ्गनाथाचार्यस्यः कृतित्त्वम्**

अस्याचार्यस्य ग्रन्थव्यूहे अनेन सिद्धान्तशिरोमणेः **मितभाषिणीव्याख्या** कृता[35] । श्रीकमलाकराज्ञया **भङ्गीविभङ्गीकरणम्,लोहगोलखण्डनम्, पलभाखण्डनम्** च त्रयो लघुग्रन्थाः मुनीश्वरमतखण्डनाय प्रणीताः[36] किन्तु तेषां प्रकाशनं सम्प्रति न जातं तृतीयः तथा विश्रुतांशः सिद्धान्तचूडामणिः यः नाम्नः तु सिद्धान्तग्रन्थः किन्तु वास्तविक रूपेण अयं करणग्रन्थः। अस्य सम्पादनं सरस्वतीसुषमायां दैवज्ञओझापाह्वहिम्मतरात्मजमीठालालशास्त्रिणा कृतं तत्र भूमिका परिशिष्टेन संवलितः तथा च संपादितः। अत्र ध्यातव्यं यत् सिद्धान्तचूडामणिः नाम्नापि ग्रन्थद्वयं प्राप्यते । प्रथमो भास्करेणोल्लेखो कृतः,पाताधिकारे11-14 श्लोकानां भाष्ये –

**रवेरोजपदक्रान्तेश्चन्द्रयुग्मपदोद्भवा।स्वल्पा चेन्न तयोः क्रान्त्योः साम्यं स्यादन्यथा भवन्।**

[34] .396, भारतीयज्योतिष,उत्तरप्रदेश हिन्दी संस्थान,हजरतगंज लखनऊ
[35] .भूमिकायां,भास्करीयगोलमीमांसा,
प्रो.देवीप्रसादत्रिपाठी,श्रीलालबहादुरयशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम् नवदेहली
[36] .205, ज्योतिषशास्त्रस्येतिहास,लोकमणिदाहालः, चौखंबा संस्कृत संस्थान वाराणसी

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

इति माधवोक्त**सिद्धान्तचूडामणि**लक्षणेनापि क्रान्तिसाम्याभावः[37],अत्र सिद्ध्यति यत् माधवः कश्चनाचार्यः आसीत् यस्य ग्रन्थः **सिद्धान्तचूडामणिः** आसीत् तस्य रचना भास्कराचार्यस्य प्राक् उत वा समकालीनकाले जातः,कालानुसारेण विचारयामः चेत् भास्कराचार्यः कथयति **रसगुणपूर्णमही(1036) समशकनृपसमयेऽभवन्मयोत्पत्तिः।रसगुणवर्षेण मया सिद्धान्तशिरोमणिरचितः**[38]अनेन ज्ञायते भास्करः षट्त्रिंशदधिकदशशताब्द्यां जातः।किन्तु माधवस्य सिद्धान्तचूडामणिः ततः प्रागीति अथ च सैद्धान्तिकग्रन्थः ।

अतः द्वितीयो सिद्धान्तचूडामणि रङ्गनाथाचार्यस्य करणग्रन्थः ।

अत्र ध्यातव्यं यत् सिद्धान्तविभागस्य प्रयोगात्मकं लोकोपयोगि स्वरूपं करणग्रन्थः भवति। तस्मिन ग्रन्थे आचार्येण द्वादशाधिकाराः तथा,ग्रन्थान्ते उपसंहारात्मकोऽधिकारः परिशिष्टद्वयं समायोजितं , प्रक्षेपश्लोकाः अपि सन्ति ते अन्ते समायोजितः,तथा च सम्पादकाचार्येण मीठालालमहाशयेन ग्रन्थादौ प्रस्तावनापि सङ्कलिता ।

**रचना वैशिष्ट्यम्-**

ग्रहाणां साधनं बाणाङ्गतिथ्यूनशकः(1565 शकाब्दतः) ग्रहक्षेपकानां तथा तेषां विविधविधिना साधनं व्यधायि।

आचार्येण अहर्गणसाधने चक्रं विहाय सावनदिनानामानयनं कृतं अतः ग्रहलाघवोक्त तथा केतकीग्रहगणितोक्त विधिनाऽत्र भिन्नता दृश्यते किन्तु वारादि सादने ततद्वारः स्पष्टतया आनयनं भवतीति।

यथा-

**बाणाङ्गतिथ्यूनशकः समौघो दिवाकरघ्नो गतमासयुक्तः।**
**पृथग् द्विनिघ्नः पृथगङ्गचन्द्रनन्दैर्हृतस्तेन विहीनकोर्ध्वात्।।**
**शराङसंप्राप्तयुतस्तदूर्ध्वः खरामनिघ्नो गततिथ्यहीनः।**
**स्थाप्यस्त्वधोऽधो भुजंगाभ्रपृथ्वीधरैरवाप्तेन युतोर्ध्वकाङगकात्।।**
**वेदाङ्गवब्धेन तदूर्ध्वकाङ्को हीनो द्युवृन्दं सितवासराद्यम्।**
**कदाचिदेतत्किल घस्रवृन्दं सैकं निरेकं सुधिया विधेयम्**[39]**।।**

[37] .168,सिद्धान्तशिरोमणिः,चौखंबा संस्कृत संस्थान वाराणसी
[38] .100, ज्योतिषशास्त्रस्येतिहास,लोकमणिदाहालः, चौखंबा संस्कृत संस्थान वाराणसी
[39] .3-5, सिद्धान्तचूडामणिः,रङ्गनाथाचार्यः,सरस्वतीसुषमा,वाराणसी प्रकाशनवर्ष संवत 2014

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

आचार्येण स्पष्टाधिकारे मन्दशीघ्रफलसाधनाय अधिकखण्डकल्पना कृता।
आचार्येण स्पष्टाधिकारे आदिमं रूपेण मन्दोच्चवर्णनं कृतं-

**नेत्रा(2)त्यष्टि(17)नखा(20) रवेर्गृहमुखं मन्दोच्चकं वेद(4)दिग्(10)**
**बाणः(5) स्यात्कुसुतस्य सप्त(7)क भु(10)भः पूर्णाग्नयो ज्ञस्य च।**
**जीवे सायक(5)मूर्च्छना(21)भ्रदहनाः शुक्रस्य नेत्रे(2) तथा नन्दाब्जा(19)**
**द्विशराः प्रभाकरसुते सप्तो(7)त्कृतिः(26) खाब्धयः(40)**[40]

मन्दोच्चवर्णनं कृत्वा आचार्यः मन्दकेन्द्रसाधनं करोति

**त्र्यूनं भुजः स्यात् त्र्याधिकोनषड्भमङ्गोर्ध्वमङ्गोनितमर्कशुद्धम्।**
**नवाधिकं चेत्तु यदुच्चशुद्धः खगस्तदाख्यं खलु केन्द्रमुक्तम्**[41]**॥**

यदा ग्रहं तथा ग्रहकेन्द्रं यदि त्रिराशितः ऊनं स्यात् चेत तदेव भुजः भवति। यदि ग्रहः त्रिराशितः अधिकः स्यात चेत् षड्राशितः विशोध्य ग्रहभुजः भवति,यदि नवराशितः ग्रहोऽधिकः ग्रहोकेन्द्रो वा स्यात् तदा द्वादशसंख्यया विशोध्य भुजः भवति। यदि भुजः राशित्रयं विशोध्य तदा कोटिः जायते । अत्र विशेषतया मन्दाङ्कानां परिकल्पना कृता। एवमेव शीघ्रकेन्द्रसाधनान्तरं शीघ्राङ्कानां परिकल्पना कृता। यथा- स्पष्टाधिकारे आचार्येण ग्रहाणां केन्द्रांशकल्पना कृता ,तेषामुल्लेखः मन्दाङ्क-अंशाः इति रूपेण चर्चा जायते।

अग्रे मन्दफलसाधनविचारः क्रियते-

**स्यान्मन्दकेन्द्रोद्भवबाहुलिप्ताः खबाणवेदै(450)र्विहृता गताङ्कः।**
**यातैष्यकाङ्कान्तरशेषघातात्खेष्वब्धिभागेन युतोऽत्र मान्दम्॥**
**कलादिकं स्यादथ तद्धनर्णं कार्यं ग्रहे मेषतुलादिकेन्द्रे।**
**स्पष्टौ रवीन्दू मृदुना फलेन भौमादयस्तेन मृदुस्फुटाःस्युः॥**[42]

आचार्येणैकस्मिन पादे द्वादशमान्दाङ्काः पठिताः। अतो नवत्यंशकलासु 90 * 60 = 5400 , 5400/12=450 कला लभ्यन्ते। अतः सार्धसप्तभागान्तरवृद्ध्या मान्दाङ्कः साधिताः सन्ति । अभीष्टस्थानीयमान्दाङ्कसाधनार्थमनुपातो यदि 450 कलाभिरेको मान्दाङ्कः तदाऽभीष्टचापकलाभिः किमिति लब्धम् ? गताङ्कः । शेषकलासंबन्धिः फलानयनाय पुनरनुपातो यदि 450 आभिः

[40] .10, सिद्धान्तचूडामणिः,रङ्गनाथाचार्यः,सरस्वतीसुषमा,वाराणसी प्रकाशनवर्ष संवत 2014

[41] .2, स्पष्टाधिकार,सिद्धान्तचूडामणिः,रङ्गनाथाचार्यः,सरस्वतीसुषमा,वाराणसी प्रकाशनवर्ष संवत 2014

[42] . 13-14, स्पष्टाधिकार,सिद्धान्तचूडामणिः,रङ्गनाथाचार्यः,सरस्वतीसुषमा,वाराणसी प्रकाशनवर्ष संवत 2014

Since 2009
ISSN- 0976-8645
UGC RN-41039

कलाभिः यातैष्यमान्दाङ्कान्तरं लभ्यते तदा शेषकलाभिः किमिति लब्धं गताङ्के योजनेनाऽभीष्टमन्दफलकला भवन्तीत्युपपन्नम्।

**उपसंहारः-**

आचार्येण सिद्धान्तचूडामणिः नाम्ना करणग्रन्थः विरचितः अतः विदग्धगणकानां समूहे सर्वदा जिज्ञासा जायते यत् अयं सिद्धान्तग्रन्थः किन्तु अस्य लक्षणे उपरि मया प्रतिपादितः । स्पष्टाधिकारे आचार्येण मान्दाङ्कानामनुपातमाध्यमेन मन्दफलसाधनं कृतं तथा शीघ्रफलसाधने शीघ्राङ्कानामनुपातं कृत्वा शीघ्रफलसाधनं कृतमिति। **अनुसन्धानस्य क्षेत्रे अहं प्रत्यक्ष रूपेण विद्यावारिधौ अनुसन्धाता रूपेण कार्यं करोमि। इतः पूर्वमपि अनुसन्धाने आचार्यकक्षायां लघु-विषयेषु विचारणा सहपाठिभिः कृता परमिदानीं मम शोधकार्यस्य महत्वपूर्ण विषयः वर्तते।श्रीरङ्गनाथविरचित-सिद्धान्तचूडामणिग्रन्थस्यादितः स्पष्टाधिकारं यावततत्त्वानां समीक्षात्मकमध्ययनम्। अस्य शोधकार्यस्य सिद्धान्तज्योतिषस्य क्षेत्रे महती आवश्यकता आसीत् । सर्वप्रथमं तु ग्रन्थस्थ बिन्दूनांसमीक्षा अन्यैः आचार्यैः रचितकरणग्रन्थैः करणीयम्,यथा भास्कराचार्यस्य करणकुतुहलम् इति ग्रन्थे भास्करेण अहर्गणस्यसाधन क्रमे चक्रस्य परिकल्पना परित्यक्त्वा अहर्गणसाधनं कृतं तद्वदेव सिद्धान्तचूडामणौ अपि अहर्गणसाधनं कृतं किन्तु द्वयोः ग्रन्थयोः मध्ये सैद्धान्तिकमन्तरं विद्यते करणकुतुहलम् ब्रह्मसिद्धान्ताधारीकृत्य ग्रहसाधनं करोति किन्तु सिद्धान्तचूडामणिः सौरमतानुसारेण ग्रहाणां प्रतिपादनं करोति। किन्तु अपरे ये आचार्याः प्राचीनकाले तथा अर्वाचीन काले आसन् ते सर्वे अहर्गणे चक्रं परिकल्पय ग्रहाणां आनयनं कुर्वन्ति ।तर्हि अत्र शोधस्य इयमेव आवश्यकता भवति यत् ग्रहाणां साधने मूलभूतमन्तरं यदि अस्ति तदा तेषां परिणामें कियदन्तरं भविष्यति इति**

**तथा यदि सिद्धान्तचूडामणि माध्यमेन ग्रहाणां साधने ,दृग्गणितैक्यकरणे कियदन्तरमागच्छति न वा यदि आगच्छति चेत किं संस्कारं कृत्वा दृकसिद्धतायाः प्राप्तिः भवितुं शक्नोति इति।**

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

## परिशीलितग्रन्थसूची


- नारदपुराणम् (व्यासः),गीताप्रेसगोरखपुर, सं.2076
- भारतीयज्योतिषशास्त्रस्येतिहासः( लोकमणिदहालः),चौखंबा सुरभारती प्रकाशन वाराणसी,2012ई.
- भास्करीयगोलमीमांसा(प्रो. देवीप्रसादत्रिपाठी) श्रीलालबहादुरशास्त्री रा.सं.वि. विद्या. नवदेहली,2010 ई.
- साङ्ख्यकारिका,(ईश्वरकृष्णः),संस्कृत ग्रन्थागार,संस्कृत नगर,रोहिणी से.14,दिल्ली,2004 ई.
- संस्कृतवाङ्मयान्तःप्रवेशिका(सोमनाथदाश) ,चौखंबा संस्कृत प्रतिष्ठान जवाहरनागर,नवदेहली,2016 ई.
- सिद्धान्तचूडामणिः(श्रीरङ्गनथदैवज्ञः),सारस्वतीसुषमा, सम्पीर्णानन्दसंस्कृतविश्वविद्यालयः वाराणसी सं.2014
- सिद्धान्तशिरोमणिः(भास्कराचार्य),चौखंबा संस्कृत संस्थान वाराणसी सं. 2070
- शब्दकल्पद्रुमः(राधाकान्तदेव)चौखंबा संस्कृत सीरीज वाराणसी,सं.2024

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024

Since 2009
ISSN- 0976-8645
UGC RN-41039

# व्याकरणशास्त्रस्य वेदाङ्गत्वम्

डा. प्रमोदकुमारशुक्लः[43]

**प्रमुखशब्दाः-** शव्दज्ञानजनकत्वम्, आकृतिः, द्रव्यः, पदार्थः, वाक्यम् , लौकिकाः, वेदिकाः, व्युत्पत्तिः, प्रकृति, प्रत्ययः

**शोधसारः-** शब्दानां विवेचनमेव व्याकरणस्य मुख्यार्थः। व्यकरणे हि प्रकृतिप्रत्ययादीनां सूक्ष्मातिसूक्ष्मं विवेचनं विद्यते एतदतिरिक्तं ध्वनिस्फोटयोः, प्रकृतिप्रत्ययोः, शब्दापशब्दयोः आकृतिद्रव्ययोः, सन्धिसमासयोः शब्दनित्यतानित्यत्वयोः, पदवाक्ययोः, पदपदार्थयोः, पदवाक्यार्थयोः च विवेचनं विष्लेशणं च व्याकरणस्य प्रयोजकत्वेनास्थीयते। व्याक्रियन्ते व्युत्पाद्यन्ते प्रकृति-प्रत्यय-विभागद्वारा निश्पाद्यन्ते शब्दाः अनेनेति व्याकरणम् वि आङ् इत्युपसर्गपूर्वकं डुकृञ् धातो ''करणाधिकरणयोश्च'' इति सूत्रेण ल्युटि प्रत्यये कृते व्याकरणपदं सिद्ध्यति। लक्ष्य-लक्षणं व्याकरणम्। भाषायाः व्यावहारिकविश्लेशणमेव व्याकरणम्। इमानि चतुर्दशसूत्राणि श्रुतिरूपाणि भवन्तीति समर्थयन्ति वैयाकरणाः। अतः श्रुतिस्मरणेनोच्चारणेन वा तज्जन्यफलभागपि भवान् भवत्वितीच्छया प्रथमतो माहेष्वरसूत्राणां स्वरूपं प्रदष्र्यते। तथाहि- अइउण्, ऋलृक् एओङ् ऐऔच् .....इत्यादि। एतानि सूत्राणि महेष्वरादागतानि अतः माहेष्वराणि इति कथ्यन्ते। एवं श्रूयते यत् महर्शिः पणिनिः व्याकरणविद्यामधिगन्तुं तपश्चकार। भगवान् महेश्वरः तपसा प्रसन्नः सन् नवपंचवारं ढक्कां ननाद। तेन च पाणिनिः मुनिः चतुर्दशसूत्राणि ''अइउण्''........ इत्यादीनि अधिगतवान्। एवं च महेश्वरप्रसादाल्लब्धानीमानि सूत्राणि माहेष्वराणि कथ्यन्ते। एशा चतुर्दशसूत्री एवमानुपूर्वीका श्रुतिरेव विद्यते। सैव श्रुतिः महेश्वरप्रसादाद् भगवता पाणिनिना लब्धेति पारम्पर्येण स्मर्यमाणेयं चतुर्दशसूत्रीति आयाति। तदुक्तं पाणिनीयषिक्षायाम्-

**येनाक्षरसमाम्नायमधिगम्यमहेष्वरात्।**
**कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः।।**

महेश्वरप्रसादात् महर्षिणा पाणिनिना प्राप्तानीति माहेश्वरसूत्राणीति कथ्यन्ते। ''वर्णसमाम्नायः, वर्णाम्नायः, वेत्यपि एषां सूत्राणां नाम भवति। यतोहि आम्नायसमाम्नायशब्दौ वेदार्थकौ भवतः तथा चामरः - श्रुतिः स्त्री वेद

[43] सहायकाचार्यः, केन्द्रीयसंस्कृतविश्वविद्यालयः, श्रीरणवीरपरिसरः, जम्मू

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

'वर्णसमाम्नायः', 'वर्णाम्नायः', 'अक्षरसमाम्नाय' इति शब्देनाप्यभिधीयन्ते। तथैवैतेशां सूत्राणां 'ब्र्रह्मराषिः' इत्यपि नाम। नन्दिकेश्वरकृतकाशिकायां 'शिवसूत्रजालम्' अपि कथितम्। 'अइउण्' इत्यादि चतुर्दशसूत्राणि साक्षात् श्रुतिर्भवन्ति।

==========================================

व्याक्रियन्ते व्युत्पाद्यन्ते शब्दाः अनेनेति शब्दज्ञानजनकं शास्त्रं व्याकरणमिति। शब्दानां विवेचनमेव व्याकरणस्य मुख्यार्थः। व्यकरणे हि प्रकृतिप्रत्ययादीनां सूक्ष्मातिसूक्ष्मं विवेचनं विद्यते एतदतिरिक्तं ध्वनिस्फोटयोः, प्रकृतिप्रत्ययोः, शब्दापशब्दयोः आकृतिद्रव्ययोः, सन्धिसमासयोः शब्दनित्यतानित्यत्वयोः, पदवाक्ययोः, पदपदार्थयोः, पदवाक्यार्थयोः च विवेचनं विष्लेशणं च व्याकरणस्य प्रयोजकत्वेनास्थीयते।

व्याक्रियन्ते व्युत्पाद्यन्ते प्रकृति-प्रत्यय-विभागद्वारा निश्पाद्यन्ते शब्दाः अनेनेति व्याकरणम् वि आङ् इत्युपसर्गपूर्वकं डुकृञ् धातो **''करणाधिकरणयोश्च''**[44] इति सूत्रेण ल्युटि प्रत्यये कृते व्याकरणपदं सिद्ध्यति। लक्ष्य-लक्षणं व्याकरणम्। भाषायाः व्यावहारिकविश्लेशणमेव व्याकरणम्। क्रमेऽस्मिन् व्याकरणशास्त्रस्य वेदाङ्गत्वविषये चर्चां कुर्मश्चेत् आदौ चतुर्दशसूत्राणामवलोकनम् अनिवार्यं भवति। भगवतः पाणिनेः व्याकरणे **''अ इ उण्''**[45] इत्यादीनि चतुर्दशसूत्राणि व्याकरणस्यास्य मूलरत्नानि सन्ति।

अत्र भवगवतः पाणिनेरीदृशी सूक्ष्मेक्षिका प्रवर्तिते विद्यते, यत्महिम्नैववान्ये प्रायः पूर्ववैयाकरणाचार्याः गौणाः अप्रसिद्धाः वा संवृताः। अत्र सर्वत्र सूत्रेशु वर्णानामेतादृशः सन्निवेषः कृतोऽस्ति यत्तत्र वर्णेनाभ्यनर्थकेन न भवितव्यम्। तानीमानि सूत्राण्येवाश्रित्य महर्शिः पाणिनिः प्रायः चतुश्चत्वारिंशत अणादीन् प्रत्याहारान् स्वीकृत्य प्रायः चतुःसहस्रं सूत्राणि रचयामास। तानिमानि सूत्राणि **''वृद्धिरादैच्''**[46] इत्यारभ्य **''अ अ''**[47] इत्यन्तानि निबद्धानि सन्त्यष्टाध्यायीग्रन्थे। एभिरेव सूत्रैर्लौकिकाः वैदिकाश्च महान्तः शब्दौघाः व्युत्पादिताः सन्त्यत्र व्याकरणे।

---

[44] अष्टाध्यायी 3/ 3/117
[45] वर्णसमाम्नाय 1 सूत्र
[46] अष्टाध्यायी 1/ 1 /1
[47] अष्टाध्यायी 8/ 4 /67

Since 2009
ISSN- 0976-8645
UGC RN-41039

इमानि चतुर्दशसूत्राणि श्रुतिरूपाणि भवन्तीति समर्थयन्ति वैयाकरणाः। अतः श्रुतिस्मरणेनोच्चारणेन वा तज्जन्यफलभागपि भवान् भवत्वितीच्छया प्रथमतो माहेष्वरसूत्राणां स्वरूपं प्रदश्यते। तथाहि- अइउण्, ऋलृक् एओङ् ऐऔच् .....इत्यादि। एतानि सूत्राणि महेष्वरादागतानि अतः माहेश्वराणि इति कथ्यन्ते। एवं श्रूयते यत् महर्शिः पणिनिः व्याकरणविद्यामधिगन्तुं तपश्चकार। भगवान् महेश्वरः तपसा प्रसन्नः सन् नवपंचवारं ढक्कां ननाद। तेन च पाणिनिः मुनिः चतुर्दशसूत्राणि ''अइउण्''........ इत्यादीनि अधिगतवान्। एवं च महेश्वरप्रसादाल्लब्धानीमानि सूत्राणि माहेश्वराणि कथ्यन्ते। एशा चतुर्दशसूत्री एवमानुपूर्वीका श्रुतिरेव विद्यते। सैव श्रुतिः महेश्वरप्रसादाद् भगवता पाणिनिना लब्धेति पारम्पर्येण स्मर्यमाणेयं चतुर्दशसूत्रीति आयाति। तदुक्तं पाणिनीयषिक्षायाम्-

**येनाक्षरसमाम्नायमधिगम्यमहेष्वरात्।**
**कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः।।**[48]

अत्र अधिगम्यमहेश्वरात्'' इत्यनेन स्पष्टमायाति यद् इमानि सूत्राणि महर्शिणा महेश्वरप्रसादाल्लब्धानीति। अतो यथा सर्वासां विद्यानामुद्गमस्थानं श्रुतिः भवति तथैव माहेश्वरसूत्राणामपीति गृहाण। केवलमत्रानुबन्धाः महेश्वरकृता इति बोध्यम्। वेदादेवैतेशामप्याविर्भाव इति भावः। एवं च एशा चतुर्दशसूत्री साक्षात् श्रुतिरेवास्ति। यथैवेदमव्युच्छिन्नं चन्द्रतारकादि एवमेतेशामपि चतुर्दशसूत्राणां कश्चनाधुनिकः शरीरी कर्ता नास्तीति भावः।

एषां माहेश्वरसूत्राणां नामान्तराण्यपि सन्ति। महेश्वरप्रसादात् महर्षिणा पाणिनिना प्राप्तानीति माहेश्वरसूत्राणीति कथ्यन्ते। ''वर्णसमाम्नायः, वर्णाम्नायः, वेत्यपि एषां सूत्राणां नाम भवति। यतोहि आम्नायसमाम्नायशब्दौ वेदार्थकौ भवतः तथा चामरः - श्रुतिः स्त्री वेद 'वर्णसमाम्नायः', 'वर्णाम्नायः', 'अक्षरसमाम्नाय' इति शब्देनाप्यभिधीयन्ते। तथैवैतेशां सूत्राणां 'ब्र्रह्मराषिः' इत्यपि नाम। नन्दिकेश्वरकृतकाशिकायां 'शिवसूत्रजालम्' अपि कथितम्। 'अइउण्' इत्यादि चतुर्दशसूत्राणि साक्षात् श्रुतिर्भवन्ति। एतत् पाणिनीयं शब्दशास्त्रं एतानि श्रुतिरूपाणि चतुर्दशसूत्राण्येवाश्रित्य प्रवृत्तानि सन्ति।

अतः श्रुतिमूलकत्वादस्यैव वेदाङ्गत्वमिति अग्रे व्याख्याष्यामः। वेदाङ्गानि षड्भवन्ति। उक्तं च महाभाष्यकारेण ''ब्राह्मणेन निष्कारणो धर्मः

[48] पा.शि.57

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

षडङ्गो वेदोऽध्येयो ज्ञेयश्च इति'' तानि च व्याकरणं , ज्यौतिषं, निरुक्तं, छन्दः, शिक्षा, कल्पश्चेति। तदुक्तं पणिनीयशिक्षायाम्-

**''छन्द:पादौ तु वेदस्य हस्तौ कल्पोऽथपठ्यते।**
**ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते।।**
**शिक्षाघ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।''**[49]

एशु षडङ्गेषु व्याकरणं प्रधानं भवति। उक्तं च भाष्ये- **''प्रधानं च षडङ्गेषु व्याकरणम्''**[50] इति। यद्यपि बहुविधं व्याकरणं वर्तते तथापि अष्ट-नव वा व्याकरणान्येव प्रसिद्धतमानि। तथाहि-

**''ऐन्दं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।**
**सारस्वतं चापिशलं शाकलं पाणिनीयकम्।।''**
**''इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः।**
**पाणिन्यमरजैनेन्द्राः जयन्त्यश्टौ हि षाब्दिकाः।।''**[51]

एतेशु व्याकरणेशु सत्स्वपि पाणिनीयव्याकरणं सम्पूर्णतयोपलभ्यमानत्वात् श्रुतिमूलकत्वात् च सर्वातिशयं महत्वं विभर्ति। यथा शरीरस्य हस्तापादादीन्यङ्गानि शरीरमुपकुर्वन्ति तथैव व्याकरणादीनि शास्त्राणि वेदार्थज्ञाने उपकारकाणि भवन्ति। व्याकरणं च भगवतो वेदस्य मुखस्थानापन्नं मुख्यमङ्गं भवति। एतच्च व्याकरणं वेदं पदपदार्थनिर्णयकत्वेन साक्षादुपकरोति। अत एवोक्तं भाष्ये- ''प्रधानं च षट्स्वङ्गेशु व्याकरणम्' । व्याकरणेश्वपि पाणिनीयमिदं व्याकरणं अत्यभ्यर्हितमङ्गं भवति। इदं व्याकरणं हि श्रुतिमूलकं भवति। यतोहि श्रुतिरूपाणि ''अइउण्'' इत्यादिचतुर्दशसूत्राण्येवाश्रित्य भगवता पाणिनिना प्रत्याहाराणि कल्पितानि। तानि प्रत्याहाराण्येवावलम्ब्य पणिनीयसूत्राणां शब्दसाधुत्वसाधकत्वं भवति। अत एव आचार्यनागेशभट्टः लघुशब्देन्दुषेखरे प्राह- **''श्रुतिमूलकत्वादस्यैव वेदाङ्गत्वम्''**[52] इति। अस्यैव इत्यत्र एवकारोऽप्यर्थकः मुख्यार्थको वा। एवं चास्य व्याकरणस्य मुखस्थानापन्नेशु व्याकरणेश्वपि सर्वतो मुख्यत्वं वर्तते। यदि चात्रान्ययोगव्यवच्छेदरूपोऽर्थः एवकारस्य स्वीक्रियते तदा ज्यौतिषादेः वेदाङ्गत्वमेव व्याहन्येत। भगवतो महेश्वरस्य प्रसादादेव पाणिनिः एतानि सूत्राणि

---

[49] पा.शि.41, 42
[50] म.भा.द्वि.
[51] व्या.शा.इतिहास
[52] ल.श.शेखरे

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

प्राप्तवान्। तानि चेमानि श्रुतिरूपाणि भवन्ति। महेश्वरस्य प्रसादादेव पाणिनिना लब्धानीत्यत्र प्रमाणं च शिक्षा वचनमेव तथाहि-

**''येनाक्षरसमाम्नायमधिगम्यमहेष्वरात्।**
**कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः।।''**[53]

अत्र अधिगम्यमहेश्वरात् इति वचनेन स्पष्टमेवायाति यत् महेश्वरप्रसादादेव लब्धानि सूत्राणीमानि इति। अक्षरसमाम्नायम् इत्युक्तेश्चैतेषां श्रुतित्वमपि नितरामायाति। एतेषां सूत्राणां ढक्कानिनादद्वारा उपदेष्टाः शिवः नतु तस्य कर्ता। तत्प्रसादात् पाणिनिः प्राप्तवानिति पाणिनिरपि नैतेषां कर्ता। एवं च 'अ इ उ' इत्यादिरूपा आनुपूर्वीका अपैरुषेयी श्रुतिरेव महर्षिणा प्राप्ता। यदि च नैयायिकमते वेदोऽपि ईश्वरकर्तृक एव इति स्वीक्रियते। तदापि महेश्वरेण प्रोक्तानि माहेश्वराणि इत्यस्मिन्नपि अर्थे श्रुतिमेतेशां सूत्राणामव्याहतमेव।

एषां माहेश्वरसूत्राणां श्रुतित्वादेव- **''सोऽयमक्षरसमाम्नायो वाक्समाम्नायः पुष्पितः फलितश्चन्द्रतारकवत् प्रतिमण्डितो वेदितव्यो ब्रह्मराषिः, सर्ववेदपुण्यफलावप्तिश्चास्य ज्ञाने भवति। मातापितरौ च अस्य स्वर्गे लोके महीयते''**[54] इति द्वितीयाह्निकस्य भाष्यमुपादाय श्रीभर्तृहरिणा भाष्यव्याख्यायाम् उक्तम्- यथैवेदमव्युच्छिनं चन्द्रतारकादि, एवमस्याक्षरसमाम्नायस्य न कश्चिदाधुनिकः कर्ता अस्ति। एवमेव वेदपारम्पर्येण स्मर्यमाण' इति, यथा श्रुतिः वेदः च अनादिः भवति, तस्य कोपि कर्ता न भवति गुरुशिष्यपरम्परया स्मर्यते। तथैव अस्याक्षरसमाम्नायस्य आधुनिकः शरीरी कश्चन कर्ता नास्ति। केवलं तेन तेनाचार्येण स्मर्यते स्मार्यते च। अक्षरसमाम्नायस्य पुष्पितत्वं एतन्मूलकशब्दशास्त्ररचनाद्वारा बोध्यम्। फलितत्वं च साधुशब्दप्रयोगद्वारा ज्ञेयम्। एवं चास्याक्षरसमाम्नायस्य श्रुतित्वं स्पश्टमेवायाति। किच '**उद्धर्तुकामः सनकादिसिद्धान्**'[55] इत्युक्तम्। अनेनास्य शिवसूत्रजालस्य ब्रह्मोपदेशस्वरूपत्वमुक्तं भवति।

ब्रह्मोपदेशत्वं च अस्य शिवसूत्रजालस्य श्रुतित्वाभावे न सम्भवति। यतोहि ''श्रोतव्यः श्रुतिवाक्येभ्यः'' इति वचनानुसारं श्रुतिवाक्यस्य ब्रह्मोपदेशकत्वं भवति। अतोऽप्येषामवश्यं श्रुतित्वं स्वीकरणीयम्। एतेषां सूत्राणां श्रुतित्वं भवतीत्यभिप्रायेणैव ऋक्तन्त्रव्याकरणे महर्षिशाकटायनः प्राह-

---

53 पा.शिक्षा

54 म.भा.द्वितीय आह्निक

55 ल.सि.कौ.

Since 2009
ISSN- 0976-8645
UGC RN-41039

**''इदमक्षरच्छन्दो वर्णशः समनुक्रान्तम्-**[56] यथा आचार्या ऊचुर्ब्रह्मा बृहस्पतये प्रोवाच, बृहस्पतिरिन्द्रायेन्द्रो भरद्वाजाय, भरद्वाजः ऋषिभ्यः, ऋषयो ब्रह्मणेभ्यस्तं खल्विममक्षरसमाम्नायमित्याचक्षते, न भुक्त्वा न नक्तं प्रब्रूयाद् ब्रह्मराषिरिति'', एतेन प्रघट्टकेन एषाम् ''अइउण्'' इत्यादीनां श्रुतित्वमवष्यमेव प्रमाणितं भवति। अत्र ब्रह्मराषिः ब्रह्मप्रतिपादको वर्णराषिः। एतेषां ब्रह्मप्रतिपादकत्वेन व्याख्यानं नन्दिकेष्वरकृतकाशिकायां कृतमस्ति। तथाहि- अइउण् अ इति परमात्मा निर्गुणः, इम् इति मायाम् आश्रित्य, उः इति व्यापकः, सगुणः, ण् इति आसीत् इत्येवं प्रकारेण तत्र व्याख्यानमुपलभ्यते।

## परिशीलितग्रन्थसूची


- वैयाकरणसिद्धान्तकौमुदी, गोपालदत्तपाण्डेय, चैखम्बासुरभारती वाराणसी 2013
- व्याकरणमहाभाष्यम्, प्रो.जयशंकरलालत्रिपाठी, चैखम्बा कृष्णदास अकादमी, वाराणसी 2013
- लघुशब्देन्दुशेखरः, पं.श्रीगोपालशास्त्री नेने, चैखम्बा प्रकाशन वाराणसी 2015
- परमलघुमंजूषा, प्रो.जयशंकरलालत्रिपाठी, चैखम्बा कृष्णदास अकादमी, वाराणसी 2013
- त्रैमुनी पत्रिका, व्याकरणविभाग रा.सं.संस्थानम्, लखनऊपरिसर, 2016
- पाणिनीय शिक्षा, संतोष पांड्या, कालिदास अकादमी उज्जैनी
- अष्टाध्यायी सूत्र पाठ, पुष्पा दीक्षित, संस्कृत भारती नवदेहली २०१६


[56] ऋक् तन्त्र व्याकरणे

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

# भारतीयज्ञानप्रणाली एव 2020 राष्ट्रियशिक्षानीत्युक्तस्य मूल्यसिद्धान्तस्य मूलाधाररूपा

**डा. सुशान्त होता**[95]

**प्रमुखशब्दाः-** भूमिका, अस्य शोधस्य उद्देश्यानि, राष्ट्रियशिक्षानीतेः आधारसिद्धान्ताः, राष्ट्रियशिक्षानीतेः आधारसिद्धान्तेषु मूल्यसिद्धान्तः, राष्ट्रियशिक्षानीतौ मूल्यसम्बद्धाः विचाराः, मूल्यसिद्धान्तस्य मूलाधारत्वेन भारतीयज्ञानप्रणाली छात्रेषु मूल्यानाम् अभिवर्धनाय पाठ्यचर्या, उपसंहारः निष्कर्षश्च

**शोधसार:-**पारम्परिकभारतीयशास्त्राणि सर्वदा मानवसमाजाय मूल्यबोधस्य ज्ञानं कारयन्ति। मूल्यबोधः सभ्यतायाः, संस्कृतेः, परम्परायाः, आदर्शस्य व्यवहारस्य च परिसूचकोऽस्ति । मूल्यानां बोधः मूल्यबोधः । अस्माकं पूर्वजन्मभिः आचारशास्त्रं, नीतिशास्त्रं, धर्मशास्त्रं मूल्यमीमांसा च इत्यादिषु शास्त्रेषु मूल्यानि लिपिबद्धानि सन्ति । मूल्यानां प्राप्तये नैके सिद्धान्ताः मार्गाश्च तत्र प्रदर्शिताः । सांस्कृतिकदृष्ट्या सामाजिकदृष्ट्या च मूल्यानाम् एते सिद्धान्ताः मार्गाश्च मानवव्यक्तित्वं परमाम् उत्कृष्टतां प्रतिपादयन्ति । परन्तु अन्याय-अनैतिकता-अराजकता-असामाजिकताप्रपीडिते समाजेऽस्मिन् मूल्यानि मलिनानि जातानि । लघुबालाः अपि मूल्यविमुखाः प्रतीयन्ते । मूल्यहीनता तेषां बालानां सम्पूर्णं जीवनं नश्यति । तस्मात् राष्ट्रियशिक्षानीतिः 2020 स्व-आधारसिद्धान्तेषु मूल्यसिद्धान्तमपि प्रमुखं स्थानं प्रदाय भारतीयज्ञानप्रणाली एव अस्य मूल्यसिद्धान्तस्य मूलाधारस्वरूपिणी वर्त्तते इति अभिव्यनक्ति । अतोऽत्र मया **भारतीयज्ञानप्रणाली एव 2020 राष्ट्रियशिक्षानीत्युक्तस्य मूल्यसिद्धान्तस्य मूलाधारः- एकम् अनुशीलनम्** इति शीर्षकमवलम्ब्य शोधपत्रम् उपस्थाप्यते ।

कस्यचित् राष्ट्रस्य सर्वविधविकासाय मानदण्डः भवति शिक्षा यस्याः आधारेण तद्राष्ट्रं स्वविकासपथे अग्रेसरति । अतः अस्माकं भारते गुणवत्तापूर्णशिक्षायै स्वतन्त्रतायाः पूर्वं परञ्च नैके शिक्षाऽऽयोगाः संस्थापिताः नैकाः शिक्षानीतयश्च

[95] सहायकाचार्यः, शिक्षाशास्त्रविभागः, श्रीसदाशिवपरिसरः, केन्द्रीयसंस्कृतविश्वविद्यालयः, पुरी

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

निर्मिताः । समयानुसारं सामाजिकावश्यकतानुगुणं शिक्षाऽऽयोगैः प्रस्तावितप्रस्तावेषु शिक्षानीतिषु च संशोधनमपि विहितम्। सर्वादौ 1968 तमे वर्षे, ततः पुनः शिक्षानीतौ संशोधनं विधाय 1986 तमे वर्षे शिक्षानीतिः स्थापिता । एवमेव विगतवर्षेषु स्थापितासु शिक्षानीतिषु याः न्यूनताः परिलक्षिताः, तासां न्यूनतानां परिपूर्णतायै एवं क्रमेण 2020 तमे वर्षे भारतसर्वकारेण पुनः एका नवीना शिक्षानीतिः संस्थापिता या राष्ट्रियशिक्षानीतिः 2020 इति प्रसिद्धा। प्राक् संस्थापितानां शिक्षानीतीनाम् अपेक्षया एषा शिक्षानीतिः काचित् विशिष्टा शिक्षानीतिः प्रतिभाति। यतोहि सर्वेभ्यः समानगुणवत्तायुक्तशिक्षाप्रदानमेव अस्याः शिक्षानीतेः मूलं लक्ष्यम्। गुणवत्तापूर्णशिक्षायाः मूलाधारः मूल्यम् इति शिक्षानीतेः आधारभूतसिद्धान्तेषु प्रकीर्त्तितम्।

भारतीयसंस्कृतिरपि तन्मूल्यकारणात् उज्जीविता । भारतीयज्ञानप्रणाल्यां सर्वत्र विविधेषु साहित्येषु मूल्यमहिमा वर्णितः । भारतीयज्ञानप्रणाल्याम् अन्तर्निहितानां मूल्यानाम् ज्ञानेन आत्मसात्करणेन च शिक्षायाः लक्ष्यम् अवश्यमेव परिपूर्णं भविष्यति इति राष्ट्रियशिक्षानीतेः अभिप्रायः।

**अस्य शोधपत्रस्य उद्देश्यानि-**

- अध्येतारः 2020 राष्ट्रियशिक्षानीतेः परिचयं सम्प्राप्य तन्महत्त्वं जानीयुः।
- अध्येतारः 2020 राष्ट्रियशिक्षानीतेः आधारसिद्धान्तान् अवगन्तुं पारयेयुः।
- अध्येतारः आधारसिद्धान्तेषु मूल्यसिद्धान्तस्य प्रतिष्ठाम् अवगन्तुं समर्थाः भवेयुः।
- अध्येतारः भारतीयज्ञानप्रणाल्याः सामान्यपरिचयं प्राप्नुयुः।
- भारतीयज्ञानप्रणाली एव मूल्यसिद्धान्तस्य मूलाधार इति अवबुद्धाः भवेयुः।
- अध्येतारः प्राचीनभारतीयसंस्कृतिं ज्ञानप्रणालीञ्च प्रति स्वाभिवृत्तिं प्रकटयेयुः।

Since 2009
ISSN- 0976-8645
UGC RN-41039

- अस्य शोधस्य आधारेण अध्येतारः 2020 राष्ट्रियशिक्षानीतौ वर्णितानाम् अन्येषाम् आधारसिद्धान्तानां अनुशीलनं कर्त्तुम् अभिप्रेरिताः भवेयुः चेत्यादीनि।

**राष्ट्रियशिक्षानीतेः आधारसिद्धान्ताः-**

2020 राष्ट्रियशिक्षानीतिः आधारसिद्धान्ते भारतीयशिक्षाप्रणाल्याः उद्देश्यं स्पष्टीकृत्य वदति यत्-

The purpose of the education system is to develop good human beings capable of rational thought and action, processing compassion and empathy courage and resilience, scientific temper and creative imagination, with sound ethical moorings and values. It aims at producing, engaged, productive and contributing citizen for building an equitable, inclusive and plural society……etc.

अर्थात् शिक्षया एतादृशानां मानवानां निर्माणं कर्त्तव्यं ये तर्कसङ्गतविचारपुरस्सरं कार्यं कर्त्तुं समर्थाः भवेयुः, येषु च करुणा, सहानुभूतिः, साहसः, नमनीयता, वैज्ञानिकचिन्तनं, रचनात्मकता, कल्पनाशक्तिः नैतिकमूल्यादयो गुणाः सन्निहिताः भवेयुः । किञ्च एते भारतीयसंविधानेन परिकल्पितस्य समावेशात्मकस्य बहुलतावादस्य च समाजस्य निर्माणे योगदानं प्रयच्छेयुः।

किञ्च आधारसिद्धान्ते निम्नोक्तविचाराः स्पष्टम् उल्लिखिताः सन्ति । तद्यथा-

- recognizing, identifying, and fostering the unique capabilities of each student, by sensitizing teachers as well as parents to promote each student's holistic development in both academic and non-academic spheres;
- according the highest priority to achieving Foundational Literacy and Numeracy by all students by Grade 3;

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

- flexibility, so that learners have the ability to choose their learning trajectories and programmes, and thereby choose their own paths in life according to their talents and interests;
- no hard separations between arts and sciences, between curricular and extra-curricular activities, between vocational and academic streams, etc. in order to eliminate harmful hierarchies among, and silos between different areas of learning;
- multidisciplinarity and a holistic education across the sciences, social sciences, arts, humanities, and sports for a multidisciplinary world in order to ensure the unity and integrity of all knowledge;
- emphasis on conceptual understanding rather than rote learning and learning-for-exams;
- creativity and critical thinking to encourage logical decision-making and innovation;
- ethics and human & Constitutional values like empathy, respect for others, cleanliness, courtesy, democratic spirit, spirit of service, respect for public property, scientific temper, liberty, responsibility, pluralism, equality, and justice;
- promoting multilingualism and the power of language in teaching and learning;
- life skills such as communication, cooperation, teamwork, and resilience;
- focus on regular formative assessment for learning rather than the summative assessment that encourages today's 'coaching culture';

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

- extensive use of technology in teaching and learning, removing language barriers, increasing access for *Divyang* students, and educational planning and management………. etc.

अत्र शिक्षानीतौ प्रतिपादितानाम् आधारभूतसिद्धान्तानां परिशीलनेन वयं जानामः यत्- गुणवत्तापूर्णशिक्षायै प्रत्येकं बालकेषु विद्यमानाः विशिष्टक्षमताः अवगम्य ताः स्वीकृत्य तासां क्षमतानां विकासाय प्रयासः विधातव्यः । आधारभूतसाक्षरतायै संख्याज्ञानाय प्राथमिकता प्रदातव्या। शैक्षिककार्यक्रमेषु नमनीयता येन बालकाः स्वरुचि-अभिरुचि-आकाङ्क्षा-योग्यतानुगुणं विषयान् स्वीकृत्य पठितुम् अवसरं प्राप्नुयुः । कला-विज्ञानयोः, पाठ्यक्रम-पाठ्येतरक्रिययोः, व्यावसायिक-शैक्षिककार्यक्रमयोः न कोऽपि भेदः स्यात् । बहुविषयकशिक्षायाः समग्रशिक्षायाश्च विकासः, बहुभाषिकतायाः च कृते प्रोत्साहनं प्रदातव्यम् । अवधारमात्मकाधिगमाय, रचनात्मकतायै, तार्किकचिन्तनाय निर्णयाय च प्रोत्साहनं भवेत् । नैतिकता, मानवीयमूल्यम्, सांविधानिकमूल्यम् इत्यादिभिः जीवनकौशलानां शिक्षायै बलं प्रदातव्यम् । अध्ययन-अध्यापनप्रक्रियायां प्रविधेः उपयोगः कर्त्तव्यः । अधिगमस्य सततमूल्याङ्कनप्रक्रिया स्वीकरणीया । पाठ्यक्रमेषु शिक्षणशास्त्रेषु च विवधताः, स्थानीयाः सांस्कृतिकसन्दर्भाः च समाविष्टाः स्युः । समता समावेशात्मकता च शैक्षिकनिर्णयस्य आधारशिले भवेताम् । अध्यापकानां कृते उत्कृष्टप्रशिक्षणाय व्यावसायिकक्षमतानाम् उन्नयनाय कार्यक्रमाणाम् आयोजनं कर्त्तव्यम् । अखण्डताद्वारा, पारदर्शितया, संसाधनकुशलतया च शैक्षिकप्रणाली प्रभाविता स्यात् । किञ्च स्वायत्ततया, सुशासनेन सशक्तिकरणेन च नवाचाराणां कृते प्रोत्साहनं प्रदातव्यम् । अनुसन्धानं शोधकार्यं वा उत्कृष्टतापूर्णं भवेत् । तथैव विषयविषेषज्ञैः निरन्तरम् अनुसन्धानेन नियमितमूल्याङ्कनेन शैक्षिकप्रगतेः सततसमीक्षा कर्त्तव्या । प्राचीनभारतीयज्ञानप्रणालीभिः सह आधुनिकसंस्कृति-प्रणाली-परम्परादीनां समन्वयं संस्थाप्य शिक्षाव्यवस्था करणीया । शिक्षा एका सार्वजनिकसेवा अस्ति । अतः गुणवत्तपूर्णां शिक्षां प्राप्तुं सर्वेषां अधिकारः स्यात् । एवं प्रकारेण सार्वजनिकसेवायामस्यां सार्वजनिकीं शिक्षाप्रणालीं द्रढीकर्त्तुं सर्वकारेतरसमाजसेवासंस्थानां, समुदायानां च प्रोत्साहनाय एषा शिक्षानीतिः बलं ददाति ।

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

**राष्ट्रियशिक्षानीतेः आधारसिद्धान्तेषु मूल्यसिद्धान्तः-**

परन्तु मूल्यबोधस्य अभावेन इदानीन्तनसमाजे मूल्यानां ह्रासः अनुदिनं परिलक्ष्यते। मूल्यानां बोधः एव मूल्यबोधः। शिक्षया सामाजिकाः यदा मूल्यानां ज्ञानमवाप्य तद्विविषये अवबुद्धाः भवन्ति तदानीं सः मूल्यबोधः इति ज्ञायते। सम्प्रति अस्माकं पूर्वजैः स्थापितानि सर्वाणि मूल्यानि प्रायः नष्टं गतानि। पारम्परिकमूल्यं प्रति अस्माकं अनास्था मूल्यबोधं प्रति अरुचिश्च क्रमशः समाजस्य रूपं मलिनीकरोति। तस्मादेव कारणात् 2020 राष्ट्रियशिक्षानीतिः तदाधारसिद्धान्तेषु मूल्यस्य मूल्यशिक्षायाश्च कृते अत्यधिकं बलं प्रददाति। तदुक्तम् आधारसिद्धान्तस्य प्रारम्भे यत्-

शिक्षया करुणा, सहानुभूतिः, साहसः, नमनीयता, वैज्ञानिकचिन्तनं, रचनात्मकता, कल्पनाशक्तिः नैतिकमूल्यम् इत्यादिभिः गुणैः युक्तानां मानवानां निर्माणं कर्त्तव्यम् इति शिक्षायाः उद्देश्यं स्पष्टं प्रतिपादितम्। एतेषां मूल्यानां शिक्षणेन तर्कसङ्गतविचारयुक्तानां मानवानां निर्माणं सम्भवति इति अत्र कथनस्य तात्पर्यं भवति। पुनश्च तत्रैव उक्तमस्ति यत्-

Ethics and human & Constitutional values like empathy, respect for others, cleanliness, courtesy, democratic spirit, spirit of service, respect for public property, scientific temper, liberty, responsibility, pluralism, equality, and justice……etc. अर्थात् सहानुभूतिः, अन्येषां सम्मानन, स्वच्छता, शिष्टाचारः, लोकतन्त्रात्मकभावना, सेवाभावना, सार्वजनिकसम्पत्तेः सम्माननं, वैज्ञानिकचिन्तनं, स्वतन्त्रता, उत्तरदायित्वं, बहुलतावादः, समानता, न्यायश्चेत्यादीनां नैतिकमूल्यानां, मानवीयमूल्यानां सांविधानिकमूल्यानाञ्च शिक्षणेन उत्तमत्तममानवानां निर्माणं भवेत् इति। किञ्च तत्र उच्यते-

Life skills such as communication, cooperation, teamwork, and resilience… etc. अर्थात् पारस्परिकसंवादः, सहयोगः, सामूहिककार्यं, नमनीयता इत्यादीनां जीवनकौशलानां जीवनमूल्यानां शिक्षणेन मानवानां विकासः संसाधनीयः इति।

**राष्ट्रियशिक्षानीतौ मूल्यसम्बद्धाः विचाराः**

मूल्यं भारतीयसंस्कृतेः परिचायकम्। एतत् भारतस्य गुणगरिमाणं प्रस्तौति। मूल्यकारणादेव समग्रे विश्वे भारतं स्वतन्त्रस्थानम् अधिकृत्य राजते। मूल्यम् इति शब्दे समाजे लोके वा प्रचलिताः आचार-विचार-व्यवहार-आदर्श-

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

मान्यता-गुण-सिद्धान्तादयोऽन्तर्भवन्ति । किञ्चैतत् मूल्यं कञ्चन गुणविशेषं काञ्चित् योग्यतां वा द्योतयति यत् लोके जनैः आदृतं स्वीकृतञ्च भवति। यथा- सत्यं, शान्तिः, दया, क्षमा, परोपकारः, त्यागः, तपः, सेवाभावना, प्रेम, विश्वासः, सहयोगः इत्यादयो गुणाः मूल्यमिति परिगण्यन्ते। मूल्यमिदं मानवेषु विद्यमानानां सद्गुणानां नैतिकाचारसंहितायाश्च ज्ञानं कारयति। वैश्विकविकासे व्यक्तित्वोन्नयने च मूल्यानां योगदानं सदैव स्वीकर्त्तव्यं भवति। विविधशास्त्रेषु नैकानि मूल्यानि वर्णितानि सन्ति । मानवव्यवहाराणां सन्मार्गप्रदर्शकरूपेण एतानि मूल्यानि सर्वदा राजन्ते । तस्मात् राष्ट्रियशिक्षानीतेः विविधेषु अध्यायेषु मूल्यसिद्धान्तसम्बद्धाः विचाराः प्राप्यन्ते। तथाहि-

**4.27** इत्यस्मिन् अध्याये उल्लिखितमस्ति यत्- "Knowledge of India" will include knowledge from ancient India and its contributions to modern India and its successes and challenges, and a clear sense of India's future aspirations with regard to education, health, environment, etc. अर्थात् आधुनिकभारतस्य सफलताः अपह्नुतीश्च समीक्ष्य भारतीयज्ञानस्य विकाससन्दर्भे प्राचीनभारतीयज्ञानस्य योगदानं सर्वदैव संस्मरणीयं भविष्यति। भारतस्य शिक्षा, स्वास्थ्यं, पर्यावरणञ्च इत्यादिषु सन्दर्भेषु अपि भारतस्य भावीकालिनाः आकाङ्क्षाः ध्यातव्याः भविष्यन्ति इति।

छात्रेषु मूल्यानाम् अभिवर्धनसन्दर्भे शिक्षानीतेः **4.28** इति अध्यायोऽयं महत्त्वपूर्णानि तथ्यानि उपस्थापयति। प्रारम्भिकवस्थातः एव "**doing what's right**" अर्थात् **उत्तमम् आचरणीयम्** हिन्दीभाषायां **सही करना** इत्यस्य महत्त्वं छात्रैः शिक्षणीयम्। यतोहि मनोविज्ञानमपि वदति यत्- शैशवावस्थायां यदा शिशुः त्रिवर्षीयः भवति तदानीं सः स्वज्येष्ठानाम् अनुकरणं कृत्वा किमपि शिक्षितुं प्रारभते। 3 तः 8 वर्षपर्यन्तं तस्मिन् याः प्रवृत्तयः विकसिताः जायन्ते ताः परस्मिन् समये तस्य शिशोः जीवनमूल्यत्वेन परिणमन्ते । अतः प्रारम्भिकावस्थातः एव छात्रेभ्यः उत्तमम् आचरणीयम् इति एतादृशी शिक्षा प्रदातव्या। किञ्च नैतिकनिर्णयं कर्त्तुं छात्राः यथा अभिप्रेरिताः भविष्यन्ति तदर्थं तार्किकप्रणाली शिक्षायां प्रयोक्तव्या भविष्यति । एवमेव निम्नलिखितानि मूल्यानि छात्रेषु अवश्यमेव विकसितानि भवेयुः इति धिया शिक्षानीतिः अभिप्रायं प्रकटयति। यथा-

- साहित्यिकं चौर्यं न करणीयम्।
- असामाजिकतत्त्वानां प्रसारणं न स्यात्।

- सहिष्णुता-समानता-सहानुभूत्यादीनां मूल्यानां विकासः भवेत्।
- नैतिकमूल्यानाम् आत्मसात्करणे छात्रा: समर्थाः भवेयुः।
- सर्वेषु कार्येषु छात्राः नैतिकाचरणं कर्त्तुं प्रेरणीयाः भवेयुः।
- पारम्परिकभारतीयमूल्यानि, आधारभूतमानवीयमूल्यानि सांविधानिकमूल्यानि छात्राः जानीयुः।

अत्र अहिंसा, स्वच्छता, सत्यम्, निष्कामकर्म, शान्तिः, त्यागः, सहिष्णुता, विविधता, बहुलतावादः, नैतिकाचरणम्, लैंगिकसंवेदनशीलता, सेवाभावना, वयोवृद्धानां सम्माननम्, सर्वेषु विद्यमानानाम् अन्तर्निहितक्षमतानां सम्माननं, पर्यावरणसंरक्षणं, सहयोगः, परोपकारः, सहायता, शिष्टाचारः, धैर्यं, क्षमा, सहानुभूतिः, करुणा, देशभक्तिः, लोकतन्त्रात्मकदृष्टिकोणः, उत्तरदायित्वम्, अखण्डता, स्वतन्त्रता, समानता, न्यायः, भ्रातृत्वभावना इत्यादीनि भारतीयज्ञानपरम्परायां वर्णितानि मूल्यानि छात्रेषु अवश्यमेव विकसितानि भवेयुः इति शिक्षानीतेरभिप्रायः।

पुनश्च शिक्षानीतेः **4.29** इति अध्यायः उल्लिखति यत्- भारतीयदृष्ट्या अर्थात् पारम्परिकपद्धत्या शिक्षणं सञ्चालितं स्यात् यत्र विद्यार्थिनः स्वसंस्कृतिं, परम्परां, रीतिं, भाषां, दर्शनम्, प्राचीनस्य समसामयिकज्ञानस्य च सामाजिकीं वैज्ञानिकीं च आवश्यकताम् अवगन्तुं समर्थाः प्रयत्नशीलाश्च भवेयुः। आलोचनात्मकचिन्तनेन नवीनविचारान् रचनात्मकताश्च ज्ञातुं ते अवसरान् प्राप्नुयुः।

भारतीयसंस्कृतेः ज्ञानाय अर्थात् स्वसंस्कृतिं, सभ्यतां, भाषां च प्रति छात्राः जागरुकाः भविष्यन्ति। **अतुल्यभारतम्** इति योजनानुगुणं छात्राः भारतस्य अलौकिकत्वं अनुपमत्वं ज्ञास्यन्ति इति कथयति। तदुक्तम्- It is this cultural and natural wealth that truly makes India, "Incredible! India", as per India's tourism slogan. The preservation and promotion of India's cultural wealth must be considered a high priority for the country, as it is truly important for the nation's identity as well as for its economy. (**अध्यायः- 22.1**)

**मूल्यसिद्धान्तस्य मूलाधारत्वेन भारतीयज्ञानप्रणाली-**

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

वैश्विकविकासे व्यक्तित्वोन्नयने च जीवनमूल्यानां महत् योगदानं वर्त्तते। सर्वाणि जीवनमूल्यानि भारतीयज्ञानप्रणाल्यां विस्तृतरूपेण वर्ण्यन्ते । एषा भारतीयज्ञानप्रणाली जीवनमूल्यानां मूलाधारः । शान्तेः अभावात् मानवस्य जीवनं यदा असन्तुलितं भवति तदानीं भारतीयज्ञानपरम्परान्तर्गतानि मूल्यानि एव सहायकानि भवन्ति। आध्यात्मिकमूल्यम्, नैतिकमूल्यम्, राष्ट्रियमूल्यम्, सामाजिकमूल्यम्, सांस्कृतिकमूल्यम्, धार्मिकमूल्यम्, राजनैतिकमूल्यम्, शाक्षिकमूल्यञ्चेति एतानि मूल्यानि अस्यां ज्ञानप्रणाल्यां मूलतत्त्वानि सन्ति। तत्र-

- **आध्यात्मिकमूल्यम्-** स्वान्तःकरणे ईश्वरीयविचार एव आध्यात्मिकमूल्यं भवति। सत्यं, शिवं, सुन्दरम्, आनन्द इत्यादीनाम् एकीकृता चेतना एव आध्यात्मिकमूल्यम्। अनेन आध्यात्मिकमूल्येन मानवान्तःकरणे अलौकिकी शक्तिः जागर्त्ति । तस्य व्यक्तित्वे दौवीगुणाः आविर्भूताः जायन्ते । अनेन सः स्वजीवनस्य द्वन्द्वेभ्यः अशान्तपरिस्थितिभ्यः मुक्तः सन् आनन्दसागरे निमज्जति, भौतिकजगतः नश्वरतायाः ज्ञानमवाप्य सदैवसत्कर्मप्रवृत्तःभवति।
- **नैतिकमूल्यम्-** नैतिकमूल्यमाध्यमेन मानवः कर्त्तव्यम् अकर्त्तव्यं, नैतिकम् अनैतिकं, हितम् अहितं, सत्यम् असत्यं, पापं पुण्यम् इत्यादीनां ज्ञानं प्राप्नोति। मानवः स्वतामसिकप्रवृत्तीः सर्वाः संनियम्य सदसद्विवेचने समर्थः भवति । वेदेषु स्मृतिशास्त्रेषु च अस्य बहूनि उदाहरणानि प्राप्यन्ते । नैतिकमूल्यानि **रामादिवत् प्रवर्त्तितव्यं न रावणादिवत्** इति शिक्षयन्ति।
- **राष्ट्रियमूल्यम्-** राष्ट्रियैकता, धर्मनिरपेक्षता, भावनात्मकैकता, समानता, सहिष्णुता, राष्ट्रप्रेम, राष्ट्रियसम्पत्तीनां सुरक्षा, राष्ट्रियप्रतीकानां सम्माननं, राष्ट्रियानुशासनम्, इत्यादयः गुणाः सामान्यतया राष्ट्रियमूल्यत्वेन प्रख्याताः । एतेषां राष्ट्रियमूल्यानां विरुद्धाचरणेन राष्ट्रस्य अभ्युदयः न सम्भवति कदाचन । एतदर्थम् अस्माकं पूर्वजाः महर्षयः राष्ट्रस्य उन्नतये राष्ट्रियमूल्यानां शिक्षायै बलं प्रदत्तवन्तः । वैदिकसाहित्ये **संगच्छध्वं संवदध्वं सं वो मनांसि जानताम्, वयं राष्ट्रे जागृयाम देवाः** इत्यादिरूपेण एतत् मूल्यं वर्ण्यते ।
- **सामाजिकमूल्यम्-** स्नेहं, श्रद्धा, सहानुभूतिः, परोपकारः, विश्वासः, प्रेम, सहयोगभावना, भ्रातृत्वभावना, विनयः, सदाचारः इत्यादयो

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

गुणाः सामाजिकमूल्यत्वेन राजन्ते । अस्य सामाजिकमूल्यस्य स्वीकरणेन मानवानां सामाजिकव्यक्तित्वं सुप्रतिष्ठितं भवति । भारतीयज्ञानप्रणाल्यां विद्यमानानि **सर्वे भवन्तु सुखिनः, अयं निजः परो वेति गणना लघुचेतसाम्, लोकाः समस्ताः सुखिनो भवन्तु** इति एतादृशानि सुभाषितानि सामाजिकमूल्यं शिक्षयन्ति ।

- **सांस्कृतिकमूल्यम्-** मानवसमाजस्य आचार-व्यवहार-मान्यता-सिद्धान्त-स्वीकृतप्रथादीनां केषाञ्चन तत्त्वानां समन्वितं स्वरूपं संस्कृतिरिति ज्ञायते । भारतीयसंस्कृतौ प्राचीनशिक्षाप्रणाली वेदोपनिषद्दर्शनपुराणेतिहाससंयुता आसीत् या मानवसमाजे मानवीयमूल्यानां मानवीयसद्गुणानां पराकाष्ठां प्रदर्शयति ।
- **राजनैतिकमूल्यम्-** राजनैतिकदृष्ट्या स्वच्छता राजनैतिकमूल्यं भवति । राजनैतिकमूल्यान्तर्गते राष्ट्रियकर्त्तव्यानि उत्तरदायित्वानि च अस्माकं प्राचीनसाहित्येषु उल्लिखितानि वर्त्तन्ते । महर्षिमनु-व्यास-विदुर-चाणक्यादीनां रचनासु एतेषां मूल्यानाम् उदाहरणानि बहुशः प्राप्यन्ते ।
- **शैक्षिकमूल्यम्-** शैक्षिकोद्देश्यानां प्राप्तिः, संसाधनानाम् उपयोगः इत्यादीनि शैक्षणिकतत्त्वानाम् आत्मसात्करणम् इत्यादीनि शैक्षिकमूल्यानि भवन्ति ।
- **धार्मिकमूल्यम्-** धार्मिकमूल्यं न केवलं धार्मिकविश्वासः अपितु अस्माकं व्यापकदृष्टिकोण: । स्व-उत्तरदायित्वानि सम्पादयितुं प्रेरयति धर्मः । मातृधर्मः, पितृधर्मः, राजधर्मः, अध्यापकधर्मः, छात्रधर्मः, नागरिकधर्मः राष्ट्रधर्मश्चेत्यादिरूपेण धार्मिकमूल्यमिदं सामाजिकान् प्रेरयति ।

इत्थं भारतीयज्ञानप्रणाल्यान्तर्गतानां केषाञ्चन मूल्यानाम् उदाहरणानि उपस्थापयामः । तत्र-

## 1. शीलम्-

शीलं महत्त्वपूर्णं पारम्परिकभारतीयमूल्यम् । छात्राः शीलसम्पन्नाः भवेयुरिति पाठ्यचर्यायां शीलगुणसम्पन्नाः विषयाः संस्थापनीयाः इति राष्ट्रियशिक्षानीतिः अभिप्रैति । शीलस्य शीलवताञ्च वैशिष्ट्यं महर्षिणा व्यासेन महाभारते उक्तं यत् -

**शीलेन हि त्रयोलोका शक्त्या जेतुं न संशयः ।**

Since 2009
ISSN- 0976-8645
UGC RN-41039

**न हि किञ्चिदसाध्यं वै लोके शीलवतां भवेत्**
॥ (महा.12/124/15)

**2. धर्मः-**

धारणार्थकात् धृ इत्यस्मात् धातोः धर्मशब्दस्य उत्पत्तिः । शास्त्रेषु महर्षिभिः धर्मलक्षणम् उक्तमस्ति। महाभारते भगवान् व्यासः वदति यत्-

**धारणात् धर्म इत्याहुः धर्मो धारयते प्रजाः।**
**यः स्यात् धारणसंयुक्तः स धर्म इति निश्चयः ॥**
(महाभारते)

पुनश्च महर्षिः मनुः **धृतिः, क्षमा, दमः, अस्तेयं, शौचम्, इन्द्रियनिग्रहः, धीः, विद्या, सत्यम्, अक्रोधः** (मनुः- 6.92 ) इति धर्मस्य दशलक्षणानि मनुस्मृतौ वदति। पुनश्च तत्र उल्लिखितं यत्-

**वेदः स्मृतिः सदाचारः स्वस्य च प्रियचात्मनः।**
**एतच्चतुर्विधंप्राहुः साक्षात् धर्मस्य लक्षणम्** ॥ इति ( मनुः)

किञ्च-

**अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः।**
**एतं सामासिकं धर्म चातुर्वर्ण्येऽब्रवीन्मनुः ॥ इति** ॥ ( मनुः 10/1 )

एवं प्रकारेण स्मृतिशास्त्रेषु धर्मस्य बहूनि पर्यायपदानि प्रतिपादितानि। शास्त्रेषु निर्दिष्टं धर्मं परिपालयन् मानवः अस्मिन् लोके कीर्त्तिं लभते परलोके च मोक्षरूपम् उत्कृष्टं धर्मफलं प्राप्नोति। तस्मात् मानवाः शास्त्रेषु अभिहितं धर्मं पालयेयुः।

**3. परोपकारः-**

भारतीयशास्त्राणि केवलमात्रम् आचारस्य व्यवहारस्य कर्मकाण्डस्य विषयः न अपितु मानवानां जीवनमूल्यानि तत्र कीर्त्तितानि । एतेषाम् अध्ययनमन्तरेण यथार्थज्ञानस्य उपलब्धिः न जायते । सर्वेषु जीवनमूल्येषु परोपकारः सर्वोत्तम इति भगवान् व्यासः वदति। अष्टदशपुराणानां सारतत्त्वत्वेन परोपकारः परमं पवित्रं कर्म तथा परपीडनं महापापम् इति व्यासेन उक्तम्। यथा-

**अष्टादशपुराणेषु व्यासस्य वचनद्वयम्।**
**परोपकारः पुण्याय पापाय परपीडनम् ॥**

अभिज्ञानशाकुन्तलनाटके महाकविकालिदासोऽपि परोपकारिणां स्वभावं परोपकारस्य वैशिष्ट्यञ्च प्रतिपादयति। तद्यथा-

**भवन्ति नम्रास्तरवो फलोद्गमैः**
**नवाम्बुभिर्दूरविलम्बिनो घनाः।**

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

**अनुद्धताः सत्पुरुषाः समृद्धिभिः**
**स्वभाव एवैष परोपकारिणाम् ।।**

4. **आध्यात्मिकता-**

मानवजीवने आध्यात्मिकतायाः स्थानम् अद्वितीयं वर्त्तते । आधुनिकसमाजस्य छात्राः आध्यात्मिकतातः दूरं गच्छन्ति । अतः शिक्षया छात्राणां मनसि आध्यात्मिकता जागरणीया । यतोहि अनेन मनसि आत्मनि च शुद्धता पवित्रता च आगच्छति । श्रद्धा, भक्तिः, प्रेम, संयमः, ईश्वरीयविश्वासः, धर्मपरायणता, पवित्रता, आत्मानुशासनम्, आत्मसमर्पणं, शरणागतिः इत्यादीनि आध्यात्मकमूल्यानि भारतीयशास्त्रेषु वर्णितानि दृश्यन्ते । भगवद्भक्तिरेव आध्यात्मिकतायाः स्रोतस्विनी । तदुक्तम्-

**श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम् ।**
**अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् ।।**

5. **अहिंसा (Nonviolence)-**

भारतीयसंस्कृतेः मूलाधारः अहिंसा । घृणा-क्रोध-अहङ्कार-दुर्भावनाभ्यः मुक्तिः नाम अहिंसा । वेद-उपनिषद्-दर्शन-शास्त्रादिषु अहिंसा विशेषरूपेण चर्च्चिता । । अहिंसा इत्यनया विनम्रता, दानं, धर्मः, प्रेम, धैर्यं, सहृदयता इत्यादीनि मूल्यानि ज्ञायन्ते । अहिंसायाः महत्त्वं प्रतिपाद्य अस्माकं भारतीयशास्त्राणि वदन्ति यत्

**हिंसा लोकेन विद्विष्टा, हिंसा धर्मक्षया वहा ।**
**अहिंसा परमा शक्तिः, अहिंसा परमं तपः ।।** इति ।। ( कपिलस्य दर्शने )
पुनश्च अहिंसा परमो धर्मः, अहिंसय्येव भूतानां कार्यं श्रेयोऽनुशासनम् इत्यादिरूपेण वयम् अहिंसां जानीमः ।

6. **सहनशीलता-**

इर्ष्या-द्वेषभावनयो: परित्यागपूर्वकं सर्वेषु समानव्यवहार एव सहनशीलता भवति । **क्षमा गुणवतां बलम्** इत्यनया सूक्त्या सहनशीलतायाः वैशिष्ट्यं वयमधिगच्छामः । पण्डितानां ज्ञानवतां वा प्रमुखलक्षणमेतत् । तदुक्तं भर्त्तृहरिनीतिशतके-

**निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु**
**लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।**
**अद्येव मरणमस्तु युगान्तरे वा,**

**न्यायात् पथः प्रविचलन्ति पदं न धीराः ॥** (भर्तृहरिः, नीतिशतके)

7. **कर्मतत्परता कर्त्तव्यपरायणता वा-**

**कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः** (ईशावास्योपनिषद्-) इति मानवानां कर्मतत्परता द्योतयति। मानवः सर्वदा कर्म एव जीवनमूल्यत्वेन स्वीकृत्य कर्मतत्परः सन् शतवर्षपर्यन्तं सदानन्दमयं जीवनं यापयेत् इति अस्याः सूक्तेः आशयः । श्रीमद्भगवद्गीता अपि मानवजीवने कर्मणः कर्त्तव्यपरायणतायाश्च प्राधान्यं स्पष्टयति । जीवने भौतिकोन्नतौ आध्यात्मिकप्रगतौ कर्मणः महनीयता ज्ञेया भवति। सम्प्रति समाजे सर्वे मानवाः कर्म अकृत्वैव फलाकाङ्क्षिणः भवन्ति । सन्दर्भेऽस्मिन् भगवान् पद्मनाभः निर्दिशति यत्-

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।**
**मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥** इति ॥ (गीता- 2/47)

कर्त्तव्यपरिपालनं विना लोकयात्राऽपि नैव प्रवर्त्तते, मानवजीवनं पथभ्रष्टं च भवति। कर्त्तव्यपालनेन मानवः साफलतायाः शिखरं परिचुम्बतीति इति तत्रैव उक्तम्-

**स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः।**
**स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥** इति ॥ (गीता- 18/54)

8. **सदाचारः-**

राष्ट्रियशिक्षानीतिः सदाचारशिक्षाविषये वदति। **आचारः परमो धर्मः** इत्येवं रूपेण सदाचारविषये बहुत्र बहु वर्णितमस्ति। अतः सदाचारात् दीर्घायुः, सुखमयं जीवनं, अक्षयधनञ्चेत्यादीनां प्राप्तिर्भवति। कथनस्य तात्पर्यमेतत् यत् आचारादेव सच्चरित्रस्य निर्माणं भवति यच्च सच्चरित्रम् आत्मशुद्धेः परिणामोऽस्ति । आत्मशुद्ध्या व्यक्तेः तीव्रगत्या विकासः सम्भवति । पुनश्च आत्मोन्नतेः सामाजिकप्रतिष्ठायाश्च मूलाधारः भवति सच्चरित्रम् । चारित्रिकह्रासः न केवलं व्यक्तेर्व्यक्तित्वं विनश्यति अपितु राष्ट्रविध्वंसकारितत्त्वान्यपि उत्पादयति । इत्थं सदाचारशिक्षा तथा च चरित्रनिर्माणसन्दर्भे भारतीयज्ञानपरम्परा सदासर्वदा जनमानसम् एवम् अभिप्रेरयति। यथोक्तं मनुना-

**आचारः परमो धर्मः श्रुत्युक्तः स्मार्त्त एव च।**
**तस्मादस्मिन्सदा युक्तो नित्यं स्यादात्मवान्द्विजः॥** (मनुस्मृतिः-1/108)

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

सत्यम् -

भारतीयशास्त्राणि सर्वदा भारतीयसंस्कृतेः भव्यं रूपम् उपस्थापयन्ति। सत्यात्मकतत्त्वस्य महिमा अत्र प्रकीर्त्तितः । सत्यमेतत् अस्माकं संस्कृतेः सर्वोत्कृष्टं पारम्परिकं मूल्यं भवति। तदुक्तं महर्षिणा कपिलेन-

**सत्यं सर्वजगन्मूलं जगदाधारकं परम्।**
**सत्यान्नास्ति परं ज्योतिः सत्यं धर्मस्य जीवितम्॥** (कपिलः)

किञ्च श्रीमद्भागवतमहापुराणे सत्यात्मकमूल्यस्य वैशिष्ट्यं वदति यत्-

**सत्यव्रतं सत्यपरं त्रिसत्यं**
**सत्यस्य योनि निहितं च सत्ये।**
**सत्यस्य सत्यमृतसत्यनेत्रं**
**त्यात्मकं त्वां शरणं प्रपन्नाः॥ इति॥ (श्रीमद्भागवतम्-10/2/26)**

एवं प्रकारेण असंख्यानि मूल्यानि अस्माकं भारतीयज्ञानप्रणाल्यां वर्ण्यन्ते। अत्र केवलं दिङ्मात्रं कानिचन मूल्यानि उदाहरणत्वेन प्रस्तुतानि।

अत्र उपरि वर्णितानि सर्वाणि मूल्यानि भारतीयसंस्कृतौ सन्निहितानि सन्ति। यद्यपि एतानि सर्वाणि पारम्परिकाणि सन्ति तथापि आधुनिकयुगस्य परिवर्त्तितपरिस्थित्यनुगुणम् एतेषां मूल्यानां प्रासङ्गिकता अद्यापि अस्ति। राष्ट्रिय-शैक्षिक अनुसन्धान-प्रशिक्षण-परिषद् (NCERT) द्वारा 83 संख्याकानि मूल्यानि स्पष्टीकृतानि। तत्र प्रेम, सहानुभूतिः, सहयोगः, सहिष्णुता, सांस्कृतिकता, सत्यता, सदाचारः, कर्त्तव्यपरायणता, स्वतन्त्रता, समानता, भ्रातृत्वभावना, समाजवादः, धर्मनिरपेक्षता, न्यायः चेत्यादीनि प्रमुखानि वर्त्तन्ते। राष्ट्रियशिक्षानीतिः 2020 अपि विविधगतिविधीनाम् आयोजनेन सैद्धान्तिकविषयाणां शिक्षणेन च छात्रेषु शारीरिकस्वच्छता, तर्कः, सौन्दर्यम्, सत्यम्, सामाजिकचेतना, उत्तमस्वास्थ्यसंरक्षणं, विवेकशीलता, कलासु रूचिसम्पन्नता, निष्पक्षता, निष्कामसेवाभावना, समस्यासमाधानशक्तिसम्पन्नता, वैज्ञानिकदृष्टिसम्पन्नता, अहिंसा, सहकारिता, सुरक्षाभावः, चिन्तनं, उत्तरदायित्वबोधः, बन्धुत्वभावना, अखण्डता, पर्यावरणजागरुकता, प्रकृतिप्रेम, निष्पक्षता इत्यादीनां मूल्यानां विकासः सम्पादनीयः इति।

**छात्रेषु मूल्यानाम् अभिवर्धनाय पाठ्यचर्या-**

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

सर्वाणि पारम्परिकमूल्यानि, आधारभूतमानवीयमूल्यानि, सांविधानिकमूल्यानि च छात्राः सम्यक् अधिगच्छेयुरिति शिक्षानीतेः अभिप्रायं वयं जानीमः । एतदर्थं शिक्षायाः विविधेषु स्तरेषु पाठ्यचर्यायां मूल्यशिक्षासम्बद्धाः निम्नोक्तविषयाः समाविष्टाः भविष्यन्ति। तद्यथा-

- ✓ पञ्चतन्त्रस्य मूलकथानाम् अध्यापनम्।
- ✓ जातकग्रन्थेषु विद्यमानानां कथानां पाठ्यचर्यायां समावेशः।
- ✓ हितोपदेशः अन्याश्च नैकाः दन्तकथाः ।
- ✓ भारतीयपरम्पराप्रेरितानां प्रेरककथानाम् अध्यापनम्।
- ✓ वैश्विकसाहित्यं प्रति भारतीयज्ञानपरम्परायाः प्रभावस्य अध्यापनम्।
- ✓ भारतीयसंविधानसम्बद्धानां विषयाणां ज्ञानम्।
- ✓ स्वस्थ्यशिक्षा- तत्र मानसिकस्वास्थ्यं शारीरिकस्वास्थ्यञ्च।
- ✓ स्वास्थ्यसंरक्षणाय प्रशिक्षणस्य व्यवस्था।
- ✓ सन्तुलित-आहारः, पोषणं कुपोषणञ्च।
- ✓ वैयक्तिकी सामाजिकी सार्वजनिकी स्वच्छता।
- ✓ जीवने आगम्यमानानां विपदां निराकरणाय शिक्षा तथा प्राथमिकचिकित्सा।
- ✓ पर्यावरणजागरुकतासम्बद्धानां विषयाणाम् अध्यापनम्।
- ✓ मानवजीवने मद्यादिमादकद्रव्याणां प्रभावः हानिश्चेत्यादयः विषयाः पाठ्यचर्यायां समाविष्टाः भविष्यन्तीति शिक्षानीतेः स्पष्टं निर्देशः।

**उपसंहारः निष्कर्षश्च-**

असामाजिकता, सांस्कृतिकज्ञानस्य अभावः, असमायोजनं, मूल्यहीनता पारम्परिकज्ञानस्य न्यूनता छात्राणां सर्वविधविकासम् अवरोधयति । तस्मात् शिक्षाव्यवस्थायां प्रारम्भिककक्षातः उच्चशिक्षापर्यन्तं सर्वासु शैक्षिकगतिविधिषु सर्वत्र शैक्षिकवातावरणेषु च मूल्यानां समन्वयः भवेदिति कृत्वा 2020 राष्ट्रियशिक्षानीतिः भारतीयज्ञानप्रणाल्याः शरणं गच्छति, येन छात्राः उत्तमसामाजिकरूपेण आत्मानं प्रतिष्ठापयन्तः स्वसमाजस्य, राष्ट्रस्य, समग्रविश्वस्य च उन्नतये सक्षमाः भवेयुः। एवं प्रकारेण भारतीयज्ञानप्रणाली एव

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

मूल्यसिद्धान्तस्य मूलाधारः इत्युक्वा जीवनमूल्यानाम् आत्मसात्करणे निम्नोक्तसन्दर्भेषु भारतीया ज्ञानप्रणाली समश्रयणीया इति निर्देशः।

- मानवीयमूल्यबोधस्य अवबोधनाय।
- छात्राणां सामाजिकीकरणसम्पादनाय।
- भारतीयज्ञानानां, संस्कृतेः, सभ्यतायाः परम्परायाश्च ज्ञानाय।
- प्राचीनभारतीयसाहित्यानाम् अध्ययनाय ज्ञानाय च।
- पारम्परिकमूल्यानाम् अवबोधपुरस्सरं व्यक्तित्वस्य विकासाय।
- तार्किकरीत्या नैतिकनिर्णयं कर्तुं छात्रेभ्यः अभिप्रेरणाय।
- सहिष्णुता-समानना-सहानुभूत्यादीनां सांविधानिक मूल्यानां विकासाय।
- विविधबहुलतावादस्य, लैङ्गिकसंवेदनशीलतायाः च ज्ञानाय।
- लोकतन्त्रात्मकदृष्टिकोणस्य विकाससम्पादनाय।
- वैश्विकसाहित्यं प्रति भारतीयज्ञानप्रणाल्याः प्रभावस्य ज्ञानाय।
- प्राचीनभारतीयसंस्कृतिं ज्ञानप्रणालीञ्च प्रति सकारात्मकदृष्टिकोणस्य निर्माणाय।

एवं प्रकारेण पर्यावरणजागरणं, परोपकारः, शिष्टाचारः, स्वास्थ्यशिक्षा, प्राथमिकचिकित्या, मादकद्रव्याणां प्रभावः हानिश्चेत्यादीनाम् एतादृशानां नैकेषां विषयाणाम् उपरि राष्ट्रियशिक्षानीतेः ध्यानं गछति। 2020 तमे वर्षे निर्मितायाः शिक्षानीतेः आमूलं परिशीलनेन ज्ञास्यामः अत्याधुनिकेऽस्मिन् प्राविधिकयुगेऽपि भारतीयज्ञानप्रणाल्याः महत्त्वम् उपदेयता च शिक्षाक्षेत्रे वर्त्तते इति दिक्।

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

## परिशीलितग्रन्थसूची

1. राष्ट्रीय शिक्षानीति 2020, मानव संसाधन विकास मन्त्रालय, भारत सरकार, 2020।
2. National Education Policy 2020, MHRD Govt. of India, 2020.
3. गर्ग विकास शिवरंजन, शर्मा नेहा, भारतीय समाज और मूल्य आधारित शिक्षा, इंटरनेशनल् चैनल् ऑफ् साइंस् टेक्नोलॉजी एंड मैनेजमेंट्, 2017.
4. मिश्र डॉ. भास्कर, शिक्षा एवं संस्कृति : नये सन्दर्भ में, भावना प्रकाशन, दिल्ली, 1995.
5. दास स्वामी रामसुख, श्रीमद्भगवद्गीता, गीता प्रेस्, गोरखपुर, संवत् 2061.
6. पाठक पी.डी., भारतीय शिक्षा और उसकी समस्याएं, विनोद पुस्तक मन्दिर, आगरा, 1974.
7. श्रीमद्भगवद्गीता तृतीयसंस्करणम्, नवदेहली, श्रीलालबहादुरशास्त्रीराष्ट्रिय-संस्कृतविद्यापीठम्, 2009.
8. रस्क आर. आर. - शिक्षा के दार्शनिक आधार, हिन्दी ग्रन्थ अकादमी जयपुर, 1971।
9. पाण्डेय प्रो. रामशकल, मूल्य शिक्षा के परिप्रेक्ष्य, सूर्यापब्लिशर्स, मेरठ-02।
10. संपादकः- झा गंगानाथ, मनुस्मृतिः, परिमल पब्लिकेशन्स, दिल्ली 2004।
11. द्विवेदी डॉ. कपिलदेव, संस्कृतनिबन्धशतकम्, विश्वविद्यालयप्रकाशनम्, चौक, वाराणसी-221001, 2010।
12. Nigal S. G., Indian conception of values and Value Education, Tattvajnan vidyapeeth, Thane, 2006.

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

# श्रीजीवन्यायतीर्थविरचितस्य दरिद्रदुर्दैव-प्रहसनपरिचयः

**डॉ. राकेशदाशः**[96]

**प्रमुखशब्दाः**-श्रीजीवन्यायतीर्थः, दरिद्रदुर्दैवम्, प्रहसनम्, नाटकम्, रूपकम्, वङ्गीयनाट्यकारः, नाटकपरिचयः

**शोधसारः**-कविः तथा विद्वान् श्रीजीवन्यायतीर्थमहोदयेन विरचितेषु बहुषु काव्येषु दरिद्रदुर्दैवं नाम प्रहसनं महत्त्वं भजते। हास्यरसाश्रितम् इदं प्रहसनं कवेः प्रतिभां परिचाययति सम्यक्। तथैव समाजस्य विशिष्टं चित्रम् अपि स्फुटयति। प्रकृतप्रबन्धे अस्य प्रहसनस्य सामान्यपरिचयः, पात्राणां परिचयः तथा अत्र प्रतिफलितं समाजचित्रम् उपस्थाप्यते समासेन।

==============================

## 1. कविः श्रीजीवन्यायतीर्थः

विशिष्टः विद्वान् श्रीजीवन्यायतीर्थमहोदयः १८९२ ईशवीयाब्दस्य जनवरीमासस्य षड्विंशे दिनाङ्के (२६.०१.१८९२) अखण्डवङ्गानां २४परगनामण्डलस्य[97] भट्टपल्ल्यां[98] जनिं लब्धवान्। पितुः पञ्चाननतर्करत्नमहोदयस्य चतुष्पाठ्यां सुपद्मव्याकरणस्य अध्ययनेन श्रीजीवन्यायतीर्थस्य विद्यारम्भः अभवत्। तस्मिन् काले वङ्गेषु कालाप-मुग्धबोध-सुपद्म-संक्षिप्तसार-हरिनामामृतादीनां बहूनाम् अपाणिनीयव्याकरणानाम् अध्ययनं सुप्रचलितम् आसीत्। पितुः सकाशे प्रारम्भिकम् अध्ययनं समाप्य अयं कलिकातानगरीं प्राप्तः। तत्र संस्कृत-कलेजियेट्-विद्यालये अस्य प्रगताध्ययनं प्रारब्धम्। रिपन्-कॉलेज-नामकात् (अधुना सुरेन्द्रनाथमहाविद्यालयः इति प्रसिद्धात्) प्रतिष्ठानात् संस्कृतविभागे बि.ए.स्तरीयम् अध्ययनं समाप्य कलिकाताविश्वविद्यालयतः एम्.ए.-उपाधिम् अपि अयम् अध्यगमत्। तत्र प्रथमस्थानम् अधिकुर्वन् अयं स्वर्णपदकेन सभाजितः। ततः पितुः आग्रहेण शास्त्रचर्चायाः पीठस्थानं वाराणसीं प्राप्तवान् श्रीजीवः। तत्र महामहोपाध्यायस्य राखालदासन्यायरत्नस्य समीपे

---

96 सहायकाचार्यः, संस्कृतदर्शनविभागे, रामकृष्णमिशन्-विवेकानन्द-शैक्षणिक-शोध-संस्थानस्य

97 अधुना पश्चिमवङ्गस्य उत्तरचब्बिशपरगनामण्डलस्य

98 भाटपाडा इति प्रसिद्धे स्थाने

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

प्राचीननवीनन्यायशास्त्रयोः आमूलचूडम् अध्ययनम् अकरोत् श्रीजीवः। तत्र न्याय-साहित्य-व्याकरणशास्त्रेषु पाटवं सम्पाद्य 'न्यायतीर्थः', 'काव्यतीर्थः', 'व्याकरणतीर्थः' इति उपाधिभिः भूषितोऽयं पण्डितश्रेष्ठः।

हरप्रसादशास्त्रिणां मार्गनिर्देशने श्रीजीवेन 'आधुनिकतर्कविज्ञानस्य क्रमविवर्तनम्' (Evolution of Modern Logic) इति शोधबन्धं विरचय्य पि.एच्.डि.-उपाधिः समधिगतः। अयं शोधबन्धः अनन्तरकाले 'न्यायसूत्रस्य प्राचीनत्वम्' (Antiquity of Nyāya-sūtra) इति नाम्ना कलिकाताविश्वविद्यालयात् प्रकाशितः।
अध्ययनं समाप्य सः अध्यापनजीवनस्य प्रारम्भे पितृदेवस्य चतुष्पाठ्याम् अध्यक्षत्वेन पाठनं प्रारब्धवान्। तदनन्तरम् ऋषिवङ्किमचन्द्रमहाविद्यालये अध्यापकपदवीम् अलञ्चकार। ततः कलिकाताविश्वविद्यालयस्य संस्कृतविभागे (१९३७-५८) अध्यापकरूपेण सः अध्यापनम् अकार्षीत्। ततः स यादवपुरविश्वविद्यालयस्य संस्कृतविभागे (१९५९-६८) अध्यापनं चकार। स दीर्घकालं यावत् संस्कृतमहाविद्यालयस्य अध्यक्षपदम् अलङ्कृतवान्।

बहुभिः उपाधिभिः सभाजितः एषः शास्त्रचर्चया समम् एव विविधानि काव्यानि रचयित्वा कवित्वयशसा अमृतत्वं भजते। तस्य विविधानि रूपकाणि साहित्यस्य अभिनवान् मानदण्डान् स्थापयन्ति। १९२६ ईशवीयाब्दे अस्य प्रथमप्रकाशनम् आसीत्, अन्तिमप्रकाशनञ्च १९८५ ईशवीयसंवत्सरे आसीत्। अस्य सारस्वतसृष्टिः निरवच्छिन्नरूपेण षष्टिं वर्षाणि प्राचलत्। शतायुरयं विद्वद्धौरेयः महाकविः १९९२ क्रैस्ताब्दे मरशरीरम् अत्यजत्।

## 2. कवेः काव्यसंसारः

### 2.1. श्रव्यकाव्यानि

- पाण्डवविक्रमम् (अष्टादशसर्गात्मकमहाकाव्यम्)
- सारस्वतशतकम् (चित्रकाव्यम्)
- ऋतुचक्रचङ्क्रमणम् (गीतिकाव्यम्)

### 2.2. दृश्यकाव्यानि

- नाटकानि– १.महाकविकालिदासम्, २.साम्यसागरकल्लोलम्, ३.श्रीशङ्कराचार्यवैभवम्, ४.नागनिस्तारम्, ५.स्वातन्त्र्यसन्धिक्षणम्, ६.विवेकानन्दचरितम्, ७.निगमानन्दचरितम्,

Since 2009
ISSN- 0976-8645
UGC RN-41039

८.सिन्धुसौवीरसङ्ग्रामम्, ९.श्रीकृष्णकौतुकम्, १०.रघुवंशम्, ११.कुमारसम्भवम्

- प्रकरणम्– १.माधुरीसुन्दरम्
- भाणः– १.विधिविपर्यासम्, २.पुरुषपुङ्गवः
- व्यायोगः– १.कैलासनाथविजयम्, २.गिरिधरसंवर्द्धनम्
- प्रहसनम्– १.विवाहविडम्बनम्, २.चण्डताण्डवम्, ३.भट्टसङ्कटम्, ४.पुरुषरमणीयम्, ५.क्षुत्क्षेमीयम्, ६.शतवार्षिकम्, ७.चिपिटकचर्वणम्, ८.रागविरागम्, ९.वनभोजनम्, १०.रामनामदातव्यचिकित्सालयम्, ११.दरिद्रदुर्दैवम्, १२.चौरचातुरीयम्, १३.नष्टहासम्।

एतानि विहाय अपि अस्य स्फुटकाव्यानि अनूदितानि च काव्यानि विदुषां विस्मयम् आवहन्ति। संस्कृतसाहित्यस्य प्रायः सर्वान् विधान् स्वलेखन्या पृष्टवतः अस्य विदुषः प्रबन्धः, रम्यरचना, प्रशस्तिगाथा, शोकगीतिः, अनूदितकाव्यं चेत्यादीनि बहूनि विराजन्ते।

**3. दरिद्रदुर्दैवप्रहसनस्य पात्राणि**

अस्मिन् प्रहसने पात्राणि भवन्ति--

- सूत्रधारः
- विदूषकः
- वक्रेश्वरः– धूर्तः विप्रः याचकः। प्रहसनस्य नायकः।
- लम्बोदरः– वक्रेश्वरस्य ज्येष्ठः पुत्रः।
- षडाननः– वक्रेश्वरस्य कनिष्ठः पुत्रः।
- क्षुद्ररामः– कृपणः, खलः, धनिकः वणिक्।
- सिद्धः– देवयोनिषु सिद्धवर्गे स्थितः शिवलोकवासी।
- मन्दोदरी– वक्रेश्वरस्य भार्या।
- सिद्धा– सिद्धस्य प्रेयसी, शिवलोकवासिनी दिव्यस्त्री।

**4. दरिद्रदुर्दैवप्रहसनस्य कथावस्तु**

ऋषिवङ्किमचन्द्रमहाविद्यालयस्य वार्षिकपरिषदुत्सवे प्रस्तुतये किञ्चन नाटकम् अन्विषन् सूत्रधारः प्रविश्य स्वकार्यसम्पादने सहायतायै विदूषकम् आह्वयति। अयं विदूषकः सुतराम् अकर्मण्यः, अलसः च। स सूत्रधारस्य सहायतायां स्वस्य अनुत्साहं प्रकटयन् कथञ्चित् तं निवारयितुं यतते स्म। तदा सूत्रधारः द्वाभ्यां मिलित्वा एव कार्यं साधनीयम् इति अबोधयत्। तत्र तेन

Since 2009
ISSN- 0976-8645
UGC RN-41039

मुषलोदूखलयोः दृष्टान्तः प्रदर्शितः। सूत्रधारः विदूषकम् उदूखलस्थानीयं मत्वा तेन सह क्रीडितुं प्रयतते इति सूत्रधारम् अदूषयत् विदूषकः। आत्मनः चातुर्यं विदूषकेन ज्ञातम् इति मत्वा तदा सूत्रधारः प्रसङ्गं परिवर्तयितुं कथयति, तदा एव क्रीडा उत्तमा भवति यदा भोजनाय पर्याप्तः तण्डुलः लभ्यते इति। तावता "पर्याप्तः तण्डुलः" इति शब्दचयं श्रुतवान् वक्रेश्वरशर्मा नेपथ्यात् कथयति, "अरे! कुतः पर्याप्तस्तण्डुलः? यावदस्ति मे दरिद्रस्य दुर्दैवम्।" एतद् वचनं श्रुतवान् सूत्रधारः 'दरिद्रस्य दुर्दैवम्' इति शब्दचयेन श्रीजीवन्यायतीर्थविरचितं दरिद्रदुर्दैवम् इति रूपकम् अस्मरत्। ततः अलब्धभिक्षाकं वक्रेश्वरशर्माणं गृहाभिमुखं गच्छन्तम् उपस्थाप्य सूत्रधारविदूषकौ निष्क्राम्यतः।

प्रहसनस्य नायकः वक्रेश्वरशर्मा भिक्षामात्रजीवी, खलस्वभावः, दुर्मुखः च। तस्य कुटुम्बे तस्य द्वितीया भार्या मन्दोदरी, पुत्रौ लम्बोदरषडाननौ च स्तः। ते त्रयः अपि गृहे वक्रेश्वरस्य आगमनं प्रतीक्षन्ते। यतः आगते वक्रेश्वरे तेन आनीतया भिक्षया सर्वेषाम् उदरपूर्तिः स्यात्। वक्रेश्वरः तु पर्याप्तां भिक्षाम् अलब्ध्वा गृहस्थान् भिक्षादायकान् अभिशपमानः मार्गेण क्राम्यति स्म। अपर्याप्तायां भिक्षायाम् अपि त्रयाणां भार्यापुत्राणां भागः वर्तते इति कामयमानः तेषां त्रयाणाम् अपि बहुभोजित्वेन निन्दनं कुर्वन् स यावता गृहम् उपसर्पति तावता गृहाङ्गने कलहायमानौ पुत्रौ दृष्ट्वा वृक्षस्य पृष्ठतः निलीय पुत्रयोः कलहं, भार्यायाः तन्निरासाय व्यर्थप्रयत्नं च पश्यति। तदा तयोः वार्तालापात् तेन ज्ञातं यत्, पुत्राभ्यां तावता एव किञ्चित् भुक्तम् अस्ति इति। एताभ्यां किञ्चिद् लाजमोदकादिकं प्राप्य भुक्तं, तेन भिक्षायां प्राप्तः तण्डुलराशिः स्वस्य एव उपयोगाय भविष्यति इति चिन्तयन् वक्रेश्वरः कांश्चन तण्डुलान् स्वस्य कच्छे गोपाय्य गृहं प्रविश्य कलहनिरसनाय उभौ छत्रेण प्रहरितुम् उद्यतः भवति। तदा पुत्रौ तस्य भिक्षापात्रं बलाद् अपहृत्य तत्र गुडलड्डुकादीनाम् अभावं दृष्ट्वा अतीव खिन्नौ। तदा वक्रेश्वरः पूर्वप्रसङ्गं स्मारयित्वा ताभ्यां किं भुक्तम् इति अपृच्छत्। मन्दोदरी अवोचत्, यत् ताभ्याम् आम्रातकपत्राणि भुक्तानि। तेन वक्रेश्वरस्य मनःशान्तिः अभवत्।

ततः मन्दोदरी अल्पायाः भिक्षायाः निमित्तं वक्रेश्वरं तर्जयति। वक्रेश्वरः कथयति यत्, स भिक्षाम् अददद्भ्यः गृहस्थेभ्यः शापं दत्त्वा आगतः इति। मन्दोदरी तं भर्त्सयन्ती कथयति, शपमानाय भिक्षुकाय कः भिक्षां दद्यात् इति। ततः मन्दोदरीवक्रेश्वरयोः कलहः प्रारभते। मन्दोदरी अधिकं भुङ्क्ते इति वक्रेश्वरः दूषयति। परिवारभरणाशक्तः अपि द्वितीयान् दारान् गृहीतवान् वक्रेश्वरः तुच्छः इति मन्दोदरी कथयति। इत्थं कलहेन मन्दोदरी गृहं त्यक्त्वा गन्तुम् उद्यता भवति।

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

तदा वक्रेश्वरः तां वारयन् स्वयम् एव गृहं त्यक्त्वा गन्तुम् उद्यतः भवति। तदा मन्दोदरी तनयौ अपि सह एव नीत्वा गच्छेत् स इति कथयन्ती तस्य कच्छवस्त्रेण तनययोः बन्धनं कर्तुं यतते। तदा कच्छवस्त्रे गोपायिताः तण्डुलाः आविष्क्रियन्ते।

ततः पल्लीवासिनां पुरतः वक्रेश्वरस्य वक्रतां प्रतिपादयितुकामां मन्दोदरीं निवारयितुकामः वक्रेश्वरः मन्दोदरीं बोधयति यत्, सपरिवारं भिक्षां चरित्वा सर्वेषाम् उदरपूरणाय भिक्षा लभ्येत। तस्मात् परिवारः सर्वः अपि भिक्षाटनार्थं निर्गच्छति।

किन्तु, प्रखरनिदाघे मध्याह्ने अटन्तः अपि ते भिक्षां न लभन्ते। क्वचित् प्रान्तरे समागताः ते पिपासया आर्ताः कस्यचिद् वृक्षस्य अधः विश्रान्तिं स्वीकुर्वन्तः निद्राम् आपन्नाः। तदा निर्जनं तं प्रान्तरं प्रविश्य वणिक् क्षुद्ररामः ज्योतिषिकेण स्वस्य कोटिमुद्राप्राप्तेः सम्भावनां स्मरन् प्राप्तेन धनेन किं किं करणीयम् इति यावद् स्वगतम् अपि उच्चैः कथयति स्म, तदा तस्य वचनैः मन्दोदर्याः निद्रा भग्ना। क्षुद्ररामस्य वचनानि श्रुत्वा तं लक्षाधीशं मत्वा वक्रेश्वरं सा जागरयति। वक्रेश्वरः क्षुद्ररामं भिक्षां याचते। किन्तु क्षुद्ररामः कृपणपुङ्गवः प्रकारान्तरेण स्पष्टम् एव स्वस्य भिक्षादाने अनिच्छां ज्ञापयित्वा निर्गतः। एतेन समधिकम् आशाहतः वक्रेश्वरः मन्दोदर्या प्रेरितः पुत्रस्य लम्बोदरस्य कृते पेयं जलम् अन्वेष्टुं निर्गतः।

तावता मञ्चं प्रविशति कश्चन सिद्धः। स देवदेवात् महादेवात् सङ्कल्पितार्थप्रदान् त्रीन् पाशकान् सम्पाद्य पृथिवीं द्रष्टुकामः मर्त्यलोकम् आगतः। किन्तु तस्य प्रिया सिद्धा तदा अपि प्रसाधने एव रता इति ज्ञात्वा पाशकक्षेपेण सिद्धायाः मुखे गुम्फम् उत्पादयति। तेन चकिता सिद्धा झटिति एव सिद्धस्य समीपम् आगच्छति। तस्याः मुखाद् गुम्फस्य अपसारणाय स पाशकान् सिद्धायै ददाति। सिद्धा पाशकक्षेपेण स्वमुखात् गुम्फम् अपसार्य सिद्धस्य लाङ्गूलम् उत्पादयति।

तावता तयोः कर्णयोः पिपासार्तस्य लम्बोदरस्य कातरध्वनिः मन्दोदर्याः च असहायताव्यञ्जकाः शब्दाः प्रविविशुः। एतेन कृपार्द्रहृदया सिद्धा पाशकक्षेपेण जलम् आनाय्य मन्दोदर्यै प्रददाति। तेन पिपासायाः निवृत्तौ कृतज्ञा मन्दोदरी यावता तस्या अभिनन्दनं करोति तावता वक्रेश्वरः अपि आगच्छति। मन्दोदरी वक्रेश्वरम् अपि निर्दिशति सिद्धायाः अभिवादनाय। वक्रेश्वरः अपि तथा चरति। तेन द्रुतहृदया सिद्धा सिद्धम् अनुरुन्द्धे वक्रेश्वराय पाशकानां दानाय। सिद्धः अनिच्छन् अपि सिद्धायाः अनुरोधम् अनुसृत्य पाशकानां प्रयोगस्य विधिम् उक्त्वा पाशकान् वक्रेश्वराय प्रयच्छति।

Since 2009
ISSN- 0976-8645
UGC RN-41039

तेषां पाशकानाम् अयं विशेषः आसीत् यत्, कश्चन पाशकात् किम् अपि याचते चेत् तद् वस्तु स लभते एव, तेन सह तस्य प्रतिवेशिनः अपि तत् वस्तु लभन्ते इति।

वक्रेश्वरः पाशकानां शक्तिपरीक्षणाय लम्बोदरस्य षडाननस्य च पात्रं तण्डुलपूर्णं भवतु इति कामयित्वा पाशकान् क्षिपति। विस्मितः स पश्यति यत्, तयोः पात्रेण सह मन्दोदरीवक्रेश्वरयोः तथा निकटवर्तिनाम् अन्येषां भिक्षुकाणाम् अपि पात्राणि तण्डुलैः पूर्णानि।

एतद् ज्ञात्वा वक्रेश्वरः आदौ आनन्दितः अपि शीघ्रम् एव दुःखितः सञ्जातः। यतः, प्रतिवेशिनाम् अभ्युदयं स न सहते। स झटिति एव प्रतिवेशिनां स्वस्य च अभ्युदयसाधकान् पाशकान् अग्नौ निक्षेप्तुम् उद्योगं करोति। तावता सिद्धः समागत्य तं निवारितवान्। वक्रेश्वरः सिद्धस्य हस्ते स्वस्य दुर्दैवनाशकान् पाशकान् प्रत्यावर्तयति। सिद्धः भरतवाक्ये कथयति, प्रतिवेशिनां सुखे एव सुखिनः सन्तः जनाः खलतां परित्यजन्तु इति।

इत्थम् अस्मिन् प्रहसने दरिद्रस्य वक्रेश्वरशर्मणः दुर्दैवं वर्णितम्। स कथम् आत्मनः भाग्यस्य परिवर्तनाय अवकाशं प्राप्य अपि तम् अवकाशं स्वयं नाशितवान् इति अस्य प्रहसनस्य प्रधानः वर्ण्यः विषयः। तद् अस्मिन् प्रहसने सुष्ठु प्रतिपादितम्। तेन कथावस्तुदृष्ट्या अस्य प्रहसनस्य नाम योग्यम् एव अस्ति इति मन्महे।

## 5. दरिद्रदुर्दैवप्रहसनस्य मुख्यपात्राणां परिचयः

### 5.1. वक्रेश्वरचरितम्

श्रीजीवन्यायतीर्थविरचितस्य दरिद्रदुर्दैवनामकस्य प्रहसनस्यास्य नायको भिक्षामात्रजीवी वक्रेश्वरनामको विप्रः। अस्मिन् प्रहसने अस्य दरिद्रस्य वक्रेश्वरशर्मण एव दुर्दैवम् उपन्यस्तम्। अयं वक्रेश्वरशर्मा दरिद्रः, स्वभावेन खलः च। तस्य खलस्वरूपं सूत्रधारेण प्रहसनस्य प्रस्तावनायामेव उद्घोषितम्– 'एष खलु निःस्वः खलस्वभावो वक्रेश्वरशर्मा' इति।

दरिद्रो निःस्वः खलस्वभावो वक्रेश्वरशर्मा भिक्षामात्रवृत्तिम् अवलम्ब्य जीवनं चालयति स्म। भिक्षावृत्तौ छिन्नं वस्त्रं, छिन्ने पादुके, छिन्नं छत्रम् एव तस्य सहायकम् आसीत्। तस्य परिवारे आसीत् पाणिगृहीती भार्या मन्दोदरी द्वौ च पुत्रौ लम्बोदरः षडाननश्च। इयं च मन्दोदरी तस्य द्वितीया भार्या। पूर्वतन्याः भार्यायाः प्रहसने अनुपस्थित्या सा मृता स्याद् इति अनुमातुं शक्यते। प्रहसनेऽस्मिन् वक्रेश्वरशर्मणः चरित्रस्य ये खलु गुणा दोषाश्च प्रकाशितास्तेषां सामान्यः परिचयः अत्र उपस्थाप्यते।

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

**याचकवृत्तिः**– वक्रेश्वरस्य भिक्षा एव वृत्तिः आसीत्। भिक्षां विहाय अन्यस्मिन् कर्मणि तस्य रुचिः नासीत्। बुभुक्षितः अपि स भिक्षाम् एव आचरति स्म। न अन्यत् कर्म तेन आश्रितम्।

**कृतघ्नः**– अयं वक्रेश्वरः पुरवासिनां गृहतः अभिलाषानुरूपां भिक्षां न प्राप्नोति चेत् तान् शपते। वस्तुतो भिक्षुकैः दानकर्तुः स्तुतिरेव कार्या। परन्तु स वक्रेश्वरः दानकर्तॄन् एव निन्दति। गृहस्थानां दानेन एव तस्य परिवारप्रतिपालनं सम्भवति इति ज्ञात्वा अपि तेषाम् अपि निन्दनेन शपनेन च तस्य कृतघ्नता एव ज्ञायते।

**स्पष्टवक्ता**– वक्रेश्वरशर्मा स्पष्टवक्ता आसीत्। मन्दोदर्यादीनां भोजनविषये यत् तेन उक्तं तद् एव अत्र प्रमाणम्। यदा क्षुद्रराम उक्तवान् यत्, यदि वक्रेश्वरः भिक्षाम् इच्छति तर्हि तस्य गृहं गत्वा भिक्षाद्रव्यं नेयम्। तदा वक्रेश्वरस्य जिज्ञासा अभवत्– ते गच्छन्ति चेत् कियती भिक्षा लभ्यते इति। ताम्रपणार्धं लभ्यते इति ज्ञात्वा वक्रेश्वरशर्मा स्पष्टम् उक्तवान्– तथा दास्यति चेत् गमनाय व्ययितं तरपण्यम् अपि न लभ्येत। तस्मात् तत्र भिक्षायाचनाय न गच्छति वक्रेश्वरः इति।

**स्वार्थपरः क्रूरः च**– भिक्षालब्धेभ्यः अपर्याप्ततण्डुलेभ्यः वक्रेश्वरशर्मा पुत्रौ भार्याञ्च वञ्चयित्वा स्वस्य शरीररक्षार्थं पथि कांश्चन तण्डुलान् पृथक् कृत्वा कच्छवस्त्रे स्थापितवान्। पुत्रयोः विषये अपि इत्थं पिशुनतां प्रदर्शयन् अयं नूनम् एव स्वार्थपरः पिशुनः च इति वक्तुं शक्यते। पुत्रौ अपि तस्य ताडनाद् बिभेति इति अपि प्रहसने स्पष्टं प्रतीयते।

**खलः**– प्रतिवेशिनः सर्वे अन्धाः कुष्ठिनः दरिद्राः वा भवन्तु इति कामयमानः अयं नूनम् एव खलः इति मन्तव्यम्। यावत् तस्य भार्या पल्लीवासिनः आहूय तेन कृतं पुत्रदाराणां वञ्चनं प्रकाशयिष्यति इति अवोचत्, तदा चाटुवचनैः भार्यायाः श्लाघाम् आरभत वक्रेश्वरः। एतेन एव तस्य खलता प्रकाशते। पुनश्च क्षुद्ररामेण निराकृतः स क्षुद्ररामाय शापम् अपि दत्तवान्– त्वमपि मत्सदृशदशां लभस्व इति। इदम् अपि तस्य खलत्वं प्रमाणयति।

**परश्रीकातरः**– वक्रेश्वरस्य पाशकक्षेपेण तस्य इव सर्वेषां प्रतिवेशिनां समानधनागमेन दुःखम् अनुभवति सः। तथाहि स उक्तवान्–

अन्धः कुष्ठी दरिद्रो वा प्रतिवेशी वरं भवेत्।
समानधनगर्वेण स्पर्धमानो हि दुःसहः॥

एतेन तस्य चरित्रे परश्रीकातरता स्फुट्यते।

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

**अहङ्कारी**– वक्रेश्वरशर्मा क्षुद्ररामाद् भिक्षां प्रत्याख्याय स्वस्य प्रशंसां कुर्वन् क्षुद्ररामं प्रति उक्तवान्–

तृणेषु वंशः खचरेषु हंसः शूरेषु कंसो मशकेषु दंशः।
विप्रेषु वक्रेश्वरशर्मनामा संसारचक्रे विदितो न केन?

इत्थं भिक्षावृत्तिम् आचरन् अपि आत्मनः श्रेष्ठतां कीर्तयन् अयं नूनम् एव अयं दाम्भिकः इति प्रतीयते।

**दायित्वज्ञानहीनः**– स पिता भूत्वा पुत्रौ भिक्षावृत्तौ नियुक्तवान्। स्वकीयकर्तव्यपालने असमर्थः अवहेलनावान् च आसीत् असौ।
एवं परान्नजीवी, श्रमविमुखः, कृतघ्नः, स्पष्टवादी, स्वार्थी, क्रूरः, खलः, परश्रीकातरः, कुटिलस्वभावः, सार्थकनामा एव वक्रेश्वरः। धीरोदात्त-धीरोद्धत-धीरललित-धीरप्रशान्तप्रकारैः नायकाः चतुर्धा भवन्ति। पुनः दक्षिणधृष्टानुकूलशठभेदेन चतुर्विधानां धीरोदात्तादीनां नायकानां चतुर्विधत्वं दृश्यते। तेन नायकाः षोडशविधाः भवितुम् अर्हन्ति। वक्रेश्वरो धृष्टधीरोद्धतप्रकारकः। धीरोद्धत एतादृशो भवेत्–

मायापरः प्रचण्डश्चपलोऽहङ्कारदर्पभूयिष्ठः।
आत्मश्लाघानिरतो धीरैर्धीरोद्धतः कथितः॥[99]

प्रहसनस्य नायको वक्रेश्वरः शीघ्रकोपी, अहङ्कारदर्पभूयिष्ठः आत्मश्लाघानिरतः च। तस्माद् अयं धीरोद्धतः इत्यत्र न कश्चित् संशयः।

कृतागा अपि निःशङ्कस्तर्जितोऽपि न लज्जितः।
दृष्टदोषोऽपि मिथ्यावाक्कथितो धृष्टनायकः॥[100]

यः अपराधं समाचर्य अपि शङ्काहीनः, तर्जितः अपि न लज्जते, गृहीतापराधः अपि मिथ्या भणति स धृष्टनायकः इति उच्यते। वक्रेश्वरः निःशङ्कचित्तः आत्मनः भोगार्थं भिक्षालब्धम् अन्नं परिवारात् गोपाय्य स्थापयति। बहुभिः तर्जितः अपि तस्य लज्जा न भवति। पुनः यदा मन्दोदरी तस्य कच्छप्रान्ते गोपितम् अन्नम् उद्धरति तदा अपि स मिथ्याभणितिभिः आत्मानम् एव समर्थयति इति धृष्टत्वे तस्य न कश्चित् सन्देहः। इत्थम् अयं धृष्टधीरोद्धतनायकः।

99 साहित्यदर्पणे– ३।३३
100 साहित्यदर्पणे– ३।३६

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

### 5.2. मन्दोदर्याः चरित्रम्

प्रहसने मन्दोदर्याः चारित्रिकवैशिष्ट्यानि यानि प्रभासन्ते तानि सम्प्रति विचारयामः। भिक्षाम् आदाय प्रत्यागते वक्रेश्वरे, पित्रा यदानीतं तस्मात् कस्य कीदृशोऽधिकारः स्याद् इत्यस्मिन् विषये वक्रेश्वरस्य पुत्रयोः मिथः विवादमानयोः मन्दोदर्याः शासनम्– 'आ हतभाग्यौ! कुक्कुरशावकाविव कथं मिथो युध्यतम्? मुखौ विरमतम्' इति। अस्माद् वाक्याद् दुर्मुखत्वम् अस्याः स्पष्टम् एव प्रतीयते। अन्यथा स्वपुत्रौ कुक्कुरशावकपदेन नाभिदध्यात् सा। दुर्मुखा अपि सा यथार्थवादिनी इत्यत्र न संशयः। भिक्षालब्धं स्वल्पं वस्तु अवलोक्य तया कथितम्– 'एतेन कस्य क्षुधानिवृत्तिर्भविष्यति?' वक्रेश्वरम् उद्दिश्य सा कथयति, 'अहो बुद्धिः! शापं ददानो भिक्षुकः केन सत्क्रियताम्!' पुनश्च सा कथयति, 'अहो मधुरोपदेशः! तनयौ किं मया पितृगृहाद् आनीतौ? यद् एतयोर्भरणभारम् अहम् अङ्गीकरोमि?' पुनश्च पतिम् उद्दिश्य– 'सत्यं मद्भरणाशक्तश्चेत् कथं कुटीरमात्रावलम्बनो द्वितीयवारं दारपरिग्रहं कृतवानसि?' इति वचनं प्रयोक्तुं तस्याः सङ्कोचः नास्ति। इत्थं तस्याः दुर्मुखत्वं यथार्थवादिता च स्पष्टम् एव प्रतीयते।

वक्रोक्तौ अपि सा राराज्यते। वक्रेश्वरं प्रति 'त्वं भूरितरं दत्त्वा बहिर्गतः, वयम् अपि पूरयित्वोदरं तिष्ठामः' इति सा व्यङ्ग्योक्तिं करोति।

वाक्पटुः सा भोजननिपुणा अपि। सा चतुःप्रसृतमितम् ओदनम् एकाकिनी खादति इति वक्रेश्वरः स्पष्टं कथयति। तत्रापि भोजनाय व्यञ्जनं केवलं तिन्तिडीपत्रसूपः एव। तावता एव सा तावन्तम् ओदनं खादति इति बहुभोजिनी आसीत् सा इति प्रतीयते।

सा स्वातन्त्र्यकामा। वक्रेश्वरेण दुर्दैवस्य कारणत्वेन दूषिता सा– 'एवञ्चेदलक्षणमाहं परित्यज्य माम्। परगृहे पाचिकावृत्तिम् आस्थाय स्वोदरं पूरयिष्यामि' इति कथयन्ती परतन्त्रतां नाङ्गीकरोति सा इति स्पष्टं कथयति।

स्वस्यां कम् अपि दोषं सा नाङ्गीकरोति। तस्या भोजनाधिक्यविषये कथयन्तं वक्रेश्वरं सा कथयति, 'अर्धाशनेन यस्याः दिनं याति सा पर्वतप्रमाणम् अन्नं गिलतीति कथयति स्वामी।'

सा दुर्मुखस्य पत्युः वक्रेश्वरस्य निग्रहोपायान् अपि सम्यग् जानाति। यदा वक्रेश्वरः गृहं परित्यज्य गन्तुम् उद्युक्तः तदा सा अवोचत्, 'तनयौ किं मया पितृगृहादानीतौ, यद् एतयोर्भरणभारम् अहम् अङ्गीकरोमि?' इति। एवम् उक्त्वा वस्तुतः पत्युः कच्छवस्त्रेण पुत्रयोः बन्धने उद्युक्ता सा कच्छवस्त्रप्रान्ते तण्डुलान्

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

आविष्कृत्य पल्लीवासिनां सविधे वक्रेश्वरस्य कुप्रवृत्तेः प्रचारणस्य भयं प्रदर्श्य वक्रेश्वरं निगृह्णाति।

किन्तु मन्दोदरी परिवारस्य पालने बद्धादरा। दारिद्र्यतापेन अपि पुत्रयोः तस्याः स्नेहप्रस्रवणं न शुष्कम्। भिक्षाटनकाले पुत्रयोः पिपासया यथा सा कातरा अभूत् तथा एव पत्युः कष्टं दृष्ट्वा तम् अपि सा उपादिशत्, 'त्वमपि क्षणमुपविश' इति। सर्वेषु शयानेषु सा एव क्षुद्ररामस्य वचनानि श्रुत्वा भिक्षालाभावकाशं मत्वा वक्रेश्वरं जागरितवती।

सा कृतज्ञा अपि। सिद्धायां जलं दत्तवत्यां सा पुत्रौ उपादिशत् तस्याः प्रणामाय। सा सरला। परश्रीकातरता तस्यां नास्ति। यदा प्रतिवेशिनां भाग्योदयेन वक्रेश्वरः पीडितः तदा तस्याः कथनम् अस्ति, 'भवन्तु सर्वेऽपि लाभवन्तः। का नो हानिः?' प्रतिवेशिनां लाभम् असहमानः वक्रेश्वरः यदा पाशकानां नाशाय उद्युक्ता तदा सा तं बोधयति येन वक्रेश्वरः पाशकनाशात् निवर्तेत।

मन्दोदरी वक्रेश्वरस्य भार्या, किन्तु तस्याः पात्रं पताकापात्रम् इति भाति। वक्रेश्वरस्य दुर्दैवम् एव प्रहसनस्य प्रतिपाद्यः विषयः। भिक्षायाः प्रतिनिवृत्तः अपि वक्रेश्वरः तस्याः कारणेन एव पुनः भिक्षायै निर्गतः। तदा वक्रेश्वरेण चोदिता सा स्वयम् अपि सपुत्रा भिक्षायै निर्गता। तस्याः करुणं रोदनम् असहमाना एव दयापरवशा सिद्धा सिद्धम् उक्त्वा पाशकान् वक्रेश्वराय अदापयत्।

प्राप्तस्य अपि सौभाग्यस्य स्वदोषेण नाशनम् एव अत्र वक्रेश्वरस्य दुर्दैवम्। वक्रेश्वरस्य सौभाग्यप्राप्तौ मन्दोदरी सहायिका। किन्तु वक्रेश्वरः भाग्यनाशाय उद्युक्तः सन् मन्दोदर्या न वारितः। यद्यपि सा वक्रेश्वरस्य निग्रहोपायान् सुष्ठु विजानाति इति पूर्वम् एव चर्चितम्। प्रहसनस्य परिणामलाभाय मन्दोदर्याः विशिष्टं योगदानम् अस्ति इत्यत्र नास्ति संशयः।

**6. समाजचित्रम्**

श्रीजीवन्यायतीर्थमहोदयेन विरचिते दरिद्रदुर्दैवनामके प्रहसने मन्दोदरी, वक्रेश्वरः, लम्बोदरः, षडाननः, क्षुद्ररामः, सिद्धः, सिद्धा चेति पात्राणि वर्तन्ते। एषु सिद्धौ विहाय अन्यानि पात्राणि न श्लाघ्यानि भवन्ति। वक्रेश्वरः खलस्वभावः, परश्रीकातरः, अहङ्कारी भिक्षुकः। द्विः परिणीतवान् सः। द्वितीया भार्या मन्दोदरी। अकिञ्चनः अपि असौ प्रौढे वयसि द्वितीयं विवाहम् अकरोत्। मन्दोदरी योग्या भार्या वक्रेश्वरस्य। पुत्रौ अपि मातापितरौ अनुकुरुतः। क्षुद्ररामः कृपणः, वञ्चकः च। एतेषां चरित्रसंलापादिभिः समाजस्य यथार्थं चित्रं न लभ्यते। अथापि केचन सामाजिकाः विषयाः अत्र स्फुटतया प्रतिभान्ति।

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

वक्रेश्वरस्य द्वितीया भार्या मन्दोदरी। कुटीरमात्रं तस्य सहायम्। भिक्षा तस्य वृत्तिः। वयसा अपि प्रौढः। अथापि तस्य द्वितीयः विवाहः। अयं समाजस्य व्याधिविशेषः सूचितः भवति। मन्दोदर्याः पितरौ अपि स्वकन्यायाः विवाहम् ईदृशेन सह अनुमतवन्तौ इति महतः दुःखस्य एव निदानम् इदम्। वक्रेश्वरः कथयति, मन्दोदरीं यदि स न परिणयेत् तर्हि अन्यः अपि यः तस्य भर्ता भवेत् सोऽपि द्वितीयपक्षीयः एव आगच्छेत्। अयम् एकः सामाजिकः पक्षः अस्मिन् प्रहसने चित्रितः वर्तते।

वक्रेश्वरः बहुधा अटित्वा अपि भिक्षां लब्धुं न समर्थः। तेन चतुर्णां परिवारजनानां निरन्नता सम्भवति। इदम् अपि समाजस्य विशिष्टं चित्रम्। दुर्भिक्षशब्दस्य यथार्थतः प्रयोगः अत्र भवितुम् अर्हति। यद्यपि वक्रेश्वरः दुर्मुखः अथापि भिक्षायाः अभावः समाजे न भवेत्। अन्यतः, समाजे आढ्यानां सङ्ख्या न्यूना नास्ति। अथापि एकस्य परिवारस्य पालनाय भिक्षा न लभ्यते इति चिन्तनीयः विषयः।

लम्बोदरषडाननौ किशोरौ अपि न अध्ययने रतौ इति विशेषः। श्रीजीवन्यायतीर्थमहोदयस्य समये समाजे प्रायः एषा स्थितिः आसीत्। प्राचीनभारते समेषां पात्रतानुगुणा शिक्षा निःशुल्का भोजनावासव्यवस्थासहिता गुरुकुलेषु कल्पिता भवति स्म। सा स्थितिः समाप्ता। अर्वाचीने काले सर्वकारेण शिक्षायाः धुरा गृहीता। किन्तु समेषां शिक्षा यथा भवेत् तादृशी व्यवस्था न कल्पिता। तेन एव लम्बोदरषडाननौ अध्ययनयोग्ये वयसि पितुः मुखम् अपेक्ष्य आम्रातकपत्राणां चर्वणे ततः च पितुः अनुरोधेन भिक्षाटनाय गतौ।

क्षुद्ररामेण समाजस्य अपरं दृश्यम् उद्घाटितम्। समाजे देवद्विजविषयिणी श्रद्धा वर्तते चेद् अपि सा श्रद्धा न भक्तिप्रीतिप्रसूता, अपि च भयलोभादिप्रसूता इति तस्य वचोभिः ज्ञायते। स धनलाभार्थं ज्यौतिषिकस्य समीपं गतः। ततः प्राप्तधनः स ज्यौतिषिकाय धनं दातुं प्रतिजानीते। किन्तु प्रतिज्ञासमकालम् एव इदम् अपि कथयति यत्, यदा कस्यचिद् वस्तुनः प्राप्तौ आशा वर्तते तदा तत्सम्प्राप्तये देवद्विजादीनां सन्तोषणाय यथेच्छं प्रतिज्ञायते चेद् अपि प्राप्ते प्राप्तव्ये तत् पूरणीयं नास्ति।

यदा क्षुद्ररामम् उपसर्प्य वक्रेश्वरः भिक्षां याचते तदा क्षुद्ररामः कथयति, अस्मिन् प्रान्तरे अपि भिक्षुकाणाम् उत्पातः इति। तेन इदं व्यज्यते यत् समाजे भिक्षुकाणां सङ्ख्या महती वर्तते इति। इदम् एव पुनः स्पष्टं भवति यदा लम्बोदरषडाननयोः भिक्षापात्रं पूरणस्य सङ्कल्पेन पाशकान् अक्षिपत् वक्रेश्वरः।

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

तस्मिन् काले नेपथ्ये बहूनां भिक्षुकाणां कोलाहलः श्रुतः। एतेन भिक्षुकाणां सङ्ख्यावृद्धिः ऊहनीया।

सिद्धस्य वचनैः काचन विशिष्टा सामाजिकी स्थितिः प्रकटिता नाट्यकारैः। यदा पाशकचमत्कारेण सिद्धायाः मुखे श्मश्रूणि अभवन् तदा पुरुषाधिकारं वाञ्छन्तीनां स्त्रीणाम् उपहासं करोति। वस्तुतः समाजे स्त्रीपुरुषयोः विविधविषयेषु वैषम्यं तथा वैमत्यं समाजस्य महत्यै हानये अकल्पत। वस्तुतः समाजे स्त्रीणां पुरुषाणां च समानः आदरः तथा समाजस्य अभिवृद्धये समानं योगदानम् अपेक्षितम् अस्ति। किन्तु, स्थितिः विपरीता आसीत्। स्त्रीणां विषये अनुचितः अनादरः तथा तासां योगदानस्य उपेक्षा समाजस्य हानिम् असाधयत्। अस्य एव प्रतिक्रियात्वेन समाजे स्त्रीणां पुरुषाणां च समानाधिकारविषये महान् प्रक्रमः आरब्धः। किन्तु इदं दृष्टं यत्, समानाधिकारनाम्ना महिलानां मर्यादानाशाय प्रयासः आरब्धः। बाह्याचरणे स्त्रीणां पुरुषानुकारिता समस्यायाः समाधानम् अकुर्वती समस्याम् अवर्धयत्। सिद्धस्य वचनैः नाट्यकारेण इदं प्रदर्शितम् अस्ति।

अस्मिन् प्रहसने श्लोकद्वयेन समाजस्य विशिष्टम् एव चित्रं कल्पितं नाट्यकारेण। एकः तु वक्रेश्वरेण उक्तः श्लोकः। स कथयति–

भिक्षापि दुर्लभा जाता शिक्षा धर्ममयी गता।
सर्वत्र तु तिरस्कारः पुरस्कारोऽर्थिनाम् अहो॥

समाजे धर्ममयी शिक्षा नष्टा वर्तते। भिक्षा दुर्लभा भवति। याचकानां सर्वत्र तिरस्कारः एव दृश्यते। किं पुनः अस्माद् अधिकं समाजस्य विषये वर्ण्यम् अवशिष्येत?

द्वितीयः श्लोकः भरतवाक्यभूतः। तत्र सिद्धः प्रार्थयते–

खलता खलतासमाकुलं
नरचित्तं परिहाय खेलतु।
प्रतिवेशिसुखाभिलाषिता
लसताल्लोकमनस्सु सन्ततम्॥

मनुष्यस्य चित्तानि खलतासमाकुलानि जातानि। कोऽपि स्वप्रतिवेशिनां कल्याणं न कामयते। प्रतिवेशिनः दुःखेन एव आत्मानं सुखिनं मन्यते जनः। वस्तुतः, सर्वेषां सुखेन एव स्वयं सुखी भवितुं शक्नोति मनुष्यः। अन्येषां दुःखकामेन मनुष्येण स्वसुखाद् अपि दूरं गतम् इति समाजस्य विशिष्टां दुर्दशाम् अत्र असूचयत् नाट्यकृत्।

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

इत्थं कस्यचन अवक्षीणस्य समाजस्य चित्रम् अस्मिन् प्रहसने प्रकटितं नाट्यकृता।

## परिशीलितग्रन्थसूची


1. श्रीजीवन्यायतीर्थेन विरचितं दरिद्रदुर्दैवम् नाम प्रहसनम् (नागराक्षरेण मुद्रितेन मूलेन वङ्गानुवादेन विशदभूमिकया विशदालोचनया च संवलितम्); राकेशदाशः, सुजितमाइतिः (सम्पादकौ); बि.एन्. पाब्लिकेशन्; कलिकाता : २०२०
2. साहित्यदर्पणः; विश्वनाथकविराजः; पाण्डुरङ्गवामनकाणे (सम्पादकः); निर्णयसागरप्रेस; मुम्बै : १९२३
3. मिश्र डॉ. भास्कर, शिक्षा एवं संस्कृति : नये सन्दर्भ में, भावना प्रकाशन, दिल्ली, 1995.
4. दास स्वामी रामसुख, श्रीमद्भगवद्गीता, गीता प्रेस्, गोरखपुर, संवत् 2061.
5. पाठक पी.डी., भारतीय शिक्षा और उसकी समस्याएं, विनोद पुस्तक मन्दिर, आगरा, 1974.
6. श्रीमद्भगवद्गीता तृतीयसंस्करणम्, नवदेहली, श्रीलालबहादुरशास्त्रीराष्ट्रिय-संस्कृतविद्यापीठम्, 2009.
7. रस्क आर. आर. - शिक्षा के दार्शनिक आधार, हिन्दी ग्रन्थ अकादमी जयपुर, 1971।

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024

Since 2009
ISSN- 0976-8645
UGC RN-41039

# ख्यातिवादनिरूपणम्

डा नेपालदासः[101]

**प्रमुखशब्दाः-** ख्यातिवादः, अध्यासः, भ्रमः, सम्प्रदायाः

**शोधसारः-**अद्वैतदर्शनं परमार्थतः जीवब्रह्मणोः स्वरूपम् ऐक्यं च बोधयति। ऐक्यबोधकानि सन्ति तत्वमस्यादीनि महावाक्यानि । बादरायणः एतेषां वेदान्तवाक्यानां तात्पर्यस्य निर्णयार्थं ब्रह्मसूत्राणि रचितवान्। ब्रह्मसूत्राणामवगमनार्थं शङ्कराचार्याः भाष्यं अलिखन्। तत्र अध्यासभाष्ये ख्यातिवादविषये आलोच्यते। दर्शनभेदे तेषां ख्यातिवैविध्यं दृश्यते। तेषां संङ्कलमस्मिन् आलेखे यथा मतिः कृतम्।

======================

**भूमिका** – भ्रमज्ञानं जीवस्य संसारबन्धनस्य कारणं किञ्च तत्त्वज्ञानं मुक्तेः कारणमित्यस्मिन् विषये आस्तिकनास्तिकदर्शनभेदे मतं प्रायः समेषां समानम्। किन्तु भ्रमज्ञानस्वरूपविषये दर्शनभेदे मतभेदाः सन्ति। तदर्थं दर्शनभेदे ख्यातेरपि विभागाः आलोच्यन्ते। वस्तुतः *ख्याति*शब्दस्य सामान्य अर्थः ज्ञानमिति। अवभासरूपविशेषार्थे प्रयुक्तः। *अवभासः* नाम प्रत्ययन्तान्तरेण बाधितं ज्ञानम्। ख्यातिः मूलतः चतुष्प्रकारकः, ते च सत्ख्यातिः, असत्ख्यातिः, सदसत्ख्यातिः, सदसद्विलक्षणख्यातिः। एतेषु सत्ख्यातिः चतुष्प्रकारकः, ते च आत्मख्यातिः, अन्यथाख्यातिः, अख्यातिः, सत्ख्याति इति।

**आत्मख्यातिः**

**बौद्धसम्मता** ख्यातिः आत्मख्यातिः। माध्यमिकान् विना अन्ये सर्वे ख्यातिरियं स्वीकुर्वन्ति। अस्या अभिधानान्तरं ज्ञानाकारख्यातिः, साकारख्यातिः वा। आत्मनः ज्ञानाकारस्य ख्यातिः आत्मख्यातिः।

योगाचाराः विज्ञानवादिनः विज्ञानं विना ज्ञेयवस्तुः नैव स्वीकुर्वन्ति। इयं विज्ञानं साकारं स्वप्रकाशं क्षणिकञ्च। वासनावैचित्राद्विज्ञानं तत्तदाकारेण उदेति। यदा अहमाकारेण उदेति तदा आलयविज्ञानमिति कथयति। यदा घटपटाद्याकारेण

[101] Asst. Professor, Central Sanskrit University, Ekalavya Campus, Agartala

Since 2009
ISSN- 0976-8645
UGC RN-41039

उदेति तदा प्रवृत्तिविज्ञानमिति कथयति। यथा – स्वप्ने ज्ञानं बाह्यविषयाननपेक्षैव विभिन्नाकारेण उदेति, जाग्रदवस्थायामपि तथा। अत्र अनुमानम् – जाग्रत्प्रत्ययाः निरालम्बनाः (स्वांशातिरिक्तालम्बनशून्याः) प्रत्ययत्वात् स्वाप्नप्रत्ययवत्। 'घटमहं पश्यामि' इत्यादिस्थलेषु यत् ज्ञेयघटादिः, ज्ञाता आत्मा च भासते तत् विज्ञानस्यैव आकारविशेषः। विज्ञानातिरिक्तः ज्ञेयज्ञात्रोश्चाभावात्। अत्र अनुमानम् – ज्ञेयत्वेनाभिमतो घटादिः ज्ञानादभिन्नः ज्ञानेन सहैव नियमेनोपलभ्यमानत्वात्, यत् येन नियतं सहोपलभ्यते तत् ततो न भिद्यते, यथा एकस्माच्चन्द्रात् द्वितीयश्चन्द्रः। तदेव उच्यते –

स्वप्नधीसाम्यतो बुद्धेर्वुद्ध्यार्थस्य सहेक्षणात्।

तद्भेदेनानिरूप्यत्वात् ज्ञानाकारोऽर्थ इष्यताम्।।

'इदं रजतमि'त्यादिभ्रमस्थले ज्ञानाकारः रजतः अनाद्यविद्याद्वारा उपनीतवाह्याध्यस्थत्वात् वहिर्वत्प्रतीयते। 'यदन्तर्ज्ञेयतत्त्वं तद्वहिर्वदवभासते'।

सौत्रान्तिक-वैभाषिकसम्प्रदायौ विज्ञानमतिरिच्य बाह्यवस्तोः सत्तामङ्गीकुर्वाते। एतौ भ्रमस्थले रजतादेः विज्ञानातिरिक्तसत्तां नाङ्गीकुरुतः। सौत्रान्तिकमते अनुमानेन, वैभाषिकमते प्रत्यक्षेण बाह्यवस्तुषु ज्ञानाकाररजतस्य आरोपे सति 'इदं रजतमि'ति व्यवहारः सिद्धति।

**अन्यथाख्यातिः** –

अन्यथा-अन्यधर्मप्रकारेण अन्यस्य ख्यातिः अन्यथाख्यातिः। विपरीतख्यातिः इत्यपि अस्ति अस्याः नामान्तरम्। इयं ख्यातिः **न्यायः वैशेषिकः पातञ्जलः भट्टमीमांसकः जैन**सम्प्रदायसम्मता। इदं रजतमित्यादिभ्रमस्थलेषु रजतत्वरूपे शुक्तेः ज्ञानं जायते अतः इयमन्यथाख्यातिः।

**अख्यातिः** –

प्रभाकरसम्मता ख्यातिः अख्यातिः। सांख्या अपि अख्यातिवादिनः। अख्यातिः इत्यस्य शब्दार्थं वर्णयति –

1. नास्तिक ख्यातिर्यत्र सा, प्रमुष्टतत्ताकस्मृतिः।

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

2. अख्यातिः अग्रहः। शुक्तिरजतयोः भेदाग्रहः।
3. न ख्यातिः अख्यातिः। अप्राशस्त्ये अर्थे नञ्।
   अगृहीतविवेकाख्यातिः।

भ्रमस्थले एते विशिष्टज्ञानं न स्वीकुर्वन्ति। इदं रजतमित्यादिस्थले इदं किञ्च रजतमुभयज्ञानं स्वतन्त्रम्। एकं प्रत्यक्षात्मकमपरञ्च स्मृतिः। आदौ पुरोवर्तीषु विषयेषु इन्द्रियसन्निकर्षात् ईदमाकारकः प्रत्यक्षात्मकः अनुभवः। ततःपरं सादृश्यवशतः पूर्वानुभूतरजस्य संस्कारोद्बुद्धस्सन् रजतस्य स्मृतिः भवति। अनुभवस्मरणात्मकज्ञानयोः झटित्युत्पत्तिकारणात् तयोः भेदः तात्कालिकः न बुध्यते। अयमगृहीतभेदः ज्ञानद्वयविसंवादिप्रवृत्तिजनकत्वात् भ्रम इति कथ्यते। वस्तुतः इदमित्यनुभवः रजतमिति स्मृतिः उभयोः सत्यत्वं न भ्रमः। ज्ञानमात्रेणैव यथार्थम्। सर्वं ज्ञानं समीचीनम्। शालिकनाथेन उच्यते –

“अहोवत्महानेष प्रमादो धीमतामपि।
ज्ञानस्य व्यभिचारित्वे विश्वासः किं निवन्धनः”।। इति।

एवं प्रकारेण सर्वत्र ज्ञानद्वयं किञ्च तेषां स्वरूपतः विषयतश्च भेदाग्रहः स्वीक्रियते। इदं ज्ञानं केषुचित् स्थलेषु अनुभवात्मकं स्मृत्यात्मकं च भवति। यथा – इदं रजतमिति। केषुचित् स्थलेषु उभयज्ञानमनुभवात्मकमेव भवति। यथा – पीतः शङ्खः इति।

**सत्ख्यातिः** –

रामानुजसम्मता ख्यातिः सत्ख्यातिः। ज्ञानमात्रेणैव सद्विषयकः, अतः भ्रमज्ञानमपि सद्विषयकः। इदं रजतमित्यादिस्थलेषु रजतादीनां यज्ज्ञानं तत्सत्यम्, अतः सत्ख्यातिः। सत्ख्यातिवादिनामभिप्रायः त्रिवित्करणप्रक्रियया पृथिव्यादिषु सर्वत्र जलादीनां न्यूनाधिक्यरूपेण अस्तित्वं तिष्ठति। अतः शुक्तिकायामपि रजतोंऽशः तिष्ठति। अतः शुक्तौ विद्यमानस्य रजतस्य एव ख्यातिः। भ्रमस्थले दोषवशतः शुक्तौ शुक्त्यंस्य अगृहितत्वात् रजतांशमात्रं गृहीतो भवति। अतः तदभिमुखे प्रवृत्तिः दृश्यते , शुक्त्यंशस्य ज्ञाने भ्रमस्य निवृत्तिः भवति।

**असत्ख्यातिः** –

माध्यमिकानां, वाचस्पतिमिश्रस्य च सम्मता ख्यातिरियम्। असत्ख्यातिविषयकं मतपार्थक्यमस्ति। तानि च –

1. भ्रमे भासमानः आरोप्यरजतादिः असत्।
2. आरोप्याधिष्ठानसम्बन्धाः त्रयाणामपि असत्वम्।

प्रथमं मतं माध्वसम्प्रदायानाम्। उद्बुद्धसंस्कारसहकृतेन्द्रियेण सह यदा पुरवर्तिवस्तुनः सन्निकर्षो भवति तदा दोषवशतः असद्रजतादिरूपेण प्रतिभातो

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

भवति। बाधज्ञानकाले असदेवेदं रजतमभात् इति प्रत्यक्षानुभव असद्रजतभाने मानम्। यद्यपि असत् प्रत्यक्षं न भवति तथापि सदुपरक्तस्य असतः प्रत्यक्षे न दोषः।

द्वितीयं मतं शून्यवादिमाध्यमिकबौद्धानाम्। एतेषां मते अधिष्ठानं आरोप्यः एतयोः सम्बन्धः असत्। एते असतः भानं स्वीकुर्वन्ति, जगतिविद्यमानानां वस्तुनामसत्त्वात्। एते निरधिष्ठानभ्रमवादिनः।

**सदसत्ख्यातिः** –

नागेशभट्टसम्मता ख्यातिः सदसत्ख्यातिः। इदं रजतित्यादिस्थलेषु यावत् पर्यन्तं अधिष्ठानसाक्षात्कारो न भवति तावत् सत्, अधिष्ठानसाक्षात्कारेण बाधितत्वात् असत्। एवं प्रकारेण भ्रमस्थले सदसत्ख्यातिः स्वीक्रियते।

**अनिर्वचनीयख्यातिः** –

सदसद्विलक्षणख्यातिः इत्यपि अस्ति अस्याः नामान्तरणम्। अनिर्वचनीयस्य सदसद्विलक्षणस्य ख्यातिः अनिर्वचनीयख्यातिः। अद्वैतवेदान्तसम्मतेयं ख्यातिः।

प्रत्येकं सदसत्त्वाभ्यां विचारपदवीं न यत्।

गाहते तदनिर्वाच्यमाहूर्वेदान्तवेदिनः।।[102]

सच्चेद्भाति कथं वाधो भाति चेत् तदसत् कथम्।

सदसद्भ्यामतोऽवाच्यं शुक्तो रूप्यमिति स्थितम्।।[103]

इदं रजतमित्यादिभ्रमस्थले आरोप्य रजतादिः न सत्, नेदं रजतमिति ज्ञानेन बाधात्। सत् कदापि न बाधते। असदपि वक्तुमशक्यम्, सत्त्वप्रतीयमानत्वात्। अतः उभयरूपदोषपरिहाराय तद्विलक्षणं स्वीकरणीयम्। अनिर्वचनीयख्यातिवादस्य वैशिष्ट्यं यत् अधिष्ठानगत-विशेषांशविषयकाज्ञानात् तत्कालोत्पन्नो रजतादेः उत्पत्तिः स्वीकर्तुं शक्यते। प्रकृतस्य मानं "न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते" इति श्रुतिः, "सन्ध्ये सृष्टिराह हि"[104] इति सूत्रम्।

बहूनामाशयः अज्ञानाद्यदनिर्वचनीयख्यातेः उत्पत्तिः भवति तत्केवलमपरोक्षभ्रमस्थले एव। परोक्षभ्रमस्थले तत्कालोत्पन्नो बह्न्यादेः उत्पत्तिः न स्वीकरोति। वस्तुतः परोक्षभ्रमस्थले अद्वैतवेदान्तिनां नास्ति कोऽपि

[102] चित्सुखी
[103] इष्टसिद्धिः
[104] ब्रह्मसूत्रम् 03.02.01

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

आग्रहः। अपरोक्षमेव वेदान्तस्य प्रतिपाद्यः। अध्यासभाष्येपि अस्मिन् विषये उच्यते। देहादेः तत्कर्तृत्वादेश्च मूलं अपरोक्षाध्यासः। तदेव उक्तम् - "अस्य अनर्थहेतोः प्रहणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ताः आरभ्यन्ते"[105] इति।

**उपसंहारः** – वेदान्तिनां वेदान्तेतरदार्शनिकानां च ख्यातिवादविषये मतपार्थक्यसत्त्वेपि न दोषः। सम्प्रदायभेदे विषयभेदः शैलिभेदश्च दृश्यते। कठिनस्य विषयस्य सर्वेषां साकल्येन सरलतया एकत्र प्रतिपादनाय प्रयत्नो मया कृतः इति।




**परिशीलितग्रन्थसूची –**


- अन्नं भट्टः. *तर्कसंग्रहः*. वाराणसी: चौखम्बसंस्कृत सीरीज, 2001.
- शङ्कराचार्यः. *कठोपनिषद्भाष्यम्*. गोरखपुर: गीताप्रेस, 2002.
- श्री पूर्णचन्द्रवेदान्तचञ्चु (सङ्कलित). *सांख्यकारिका*. कोलकाता: पश्चिमवङ्गराज्य पुस्तकपरिषत्, 2007.
- श्री श्रीमहोन भट्टाचार्यः. *भामती*. कोलकाता: संस्कृतपुस्तकभाण्डार, 1973.
- सायणाचार्यः. *ऋग्वेदसंहिताभाष्यम्*. वाराणसी: चौखम्बासंस्कृतसंस्थानम्, 2002.


[105] ब्रह्मसूत्रम् अध्यासभाष्यम्

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

# डा. राघवन्-महोदयकृतमहाकाव्यस्यावलोकम्

**श्रीरानारायनस्वामी अय्यर तथा डा.सुनील के एस्**[107]

**प्रमुखशब्दाः** – श्रीमुथुस्वामी, कर्णाटकसङ्गीतम्, संगीतकारः, भरतमुनिः।

**शोधसारः-** शीर्षकानुसारं एतत् महाकाव्यं महान् गीतकारस्य मुथुस्वामी दीक्षितस्य सम्पूर्णं जीवनं न्याय्यं करोति तथा च भारतस्य पवित्रसङ्गीतपरम्परायाः संरक्षणे तस्य उदात्तजीवनस्य आदर्शस्य च सुन्दरं चित्रं प्रस्तुतं करोति।

==========================

सामवेदः भारतीयशास्त्रीयसङ्गीतस्य स्रोतः अस्ति , अत एव भरतमुनिः अवदत् यत् शास्त्रीयसङ्गीतं अस्माकं महान् ऋषिभिः , दार्शनिकैः , कविभिः, संगीतकारैः गायकैः च संरक्षितम् अस्ति एषा प्रान्तीयशुद्धा भारतीयसङ्गीतपरम्परा "कर्नाटकसङ्गीतम्" इति कथ्यते श्री मुथुस्वामी दीक्षितः कर्णाटकसङ्गीतस्य महान् संगीतकारः आसीत् , कर्नाटकसङ्गीतक्षेत्रे अमूल्ययोगदानस्य कृते सः सर्वदा स्मर्यते |. अस्य महान् दूरदर्शी सङ्गीतविद्वान् विस्तरेण ज्ञातुं प्रख्यातः बहुभाषी विद्वान् डॉ. वी. राघवन । **' श्री मुथुस्वामी दीक्षित चरितम् ' .** सः महाकाव्यं संस्कृतेन लिखित्वा महत् पुण्यं कृतवान् | लेखकेन श्री मुथुस्वामी दीक्षितस्य जीवनसंबद्धविचारान् सम्यक् रेखांकनं कृत्वा चर्चां सुत्तस्य जीवनीयाः महत्त्वपूर्णपक्षेषु चित्रणं कृत्वा काव्यात्मकरूपेण कथात्मकरूपेण च महता कौशलेन कथितवान् अस्ति**' श्री मुथुस्वामीदीक्षित चरितम्' .** कर्णाटकसङ्गीतस्य महान् रचयिता श्री मुथुस्वामी दीक्षितस्य जीवनवृत्तान्तः अस्ति , यस्य लेखनं डॉ. वि. राघवनः महाकाव्यशैल्यां लिखितवान् ।[108] इदं कृतिः सम्भवतः: अच्युतः प्रथमं महाकाव्यं यत् सङ्गीतप्रधानजगति साधकस्य जीवनं गृहीतवान्। सङ्गीतप्रेमिणां, उपासकानां, पारखीनां कृते आदर्शः , अक्षरशः विश्वकोशः अतिशयोक्तिः कर्तुं न शक्यते। अद्भुतं यत् कविः दीक्षितस्य जीवनस्य निष्ठावान् चित्रं प्रस्तुतं करोति , यत्र अनेकसङ्गीतकारानाम् जीवनीसन्दर्भाः सन्ति , न केवलं सङ्गीतस्य स्वभावः

---

107 संस्कृतविभागाध्यक्षः, जैनमहाविद्यालयः, बेङ्गलुळु

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

विशेषतः भारतीयसङ्गीतस्य स्वभावः चिकित्सादर्पणः इति साधयति न केवलम्, कृतिनिर्मातारः अपि अस्मिन् महाकाव्ये मुथुस्वामी दीक्षितस्य केषाञ्चन संगीतरत्नानाम् वर्धनस्य आव्हानं स्वीकृतवन्तः, तेषां सूक्ष्मतां सूक्ष्मसूत्रं कृत्वा। अस्य ग्रन्थस्य केचन दुर्लभाः विशेषताः सन्ति यथा पञ्चदशशताब्द्याः दक्षिणभारतस्य सामाजिकधार्मिकजीवनस्य सुरीले वर्णनं , मन्दिरस्य आख्यायिकानां सन्दर्भाः कविनां , सन्तानाम् , राजानां च केचन तथ्यात्मकाः विवरणाः च |.

सम्प्रति अस्य लेखस्य शीर्षकं **' श्री मुथुस्वामीदीक्षितचरितम् ' अस्ति** | - साहित्यिकं - विशले शैतानी- महाकाव्यं इति तर्कयितुं तस्य केषाञ्चन महत्त्वपूर्णलक्षणानाम् चर्चां कर्तुं च उद्दिश्यते | युगात् आरभ्य भारतस्य सर्वेभ्यः भागेभ्यः प्रवहन्तः साहित्यस्य धाराः संस्कृतसाहित्यस्य समुद्रः परितः अस्ति . ते कश्मीरतः बङ्गदेशस्य कन्याकुमारीपर्यन्तं , कामरूपतः पञ्जाबपर्यन्तं गुजरातपर्यन्तं च विकीर्णाः सन्ति | संस्कृत साहित्यं प्रति बहिः तर्कशीलतायाः कल्पना कर्तुं न शक्यते | पौराणिक कथा , काव्य , नाटकीय कृतयः विहाय व्याकरण , शब्दकोश , ज्योतिषशास्त्र , खगोलशास्त्र , काव्य , दर्शन , संगीत , नृत्य इत्यादीनां ज्ञानस्य विभिन्न आयामानां शतशः कृतीनां माध्यमं गिरवाणम् अभवत् । अनेकेषु रोचकतथ्येषु एकः उल्लेखनीयः बिन्दुः अस्ति यत् शिल्पसंशोधनस्य अधीनाः काश्चन अद्वितीयाः सूचनाः कर्णाटकसङ्गीतस्य वग्गेयाकारः अस्ति अत्यन्तं समीपस्थं इव भासते यत् सूचना अस्मिन् महाकाव्ये सुरुचिपूर्णतया प्रस्तुता अस्ति इति आश्चर्यं भवेत् | **चतुर्दण्डिप्रकाशिका** सङ्गीतस्य पारम्परिकलक्षणग्रन्थेषु अन्यतमः अस्ति , **रागलाक्षः** एतादृशाः केषुचित् कृतयः पूर्वमेव संस्कृतग्रन्थाः इति प्रकाशं दृष्टवन्तः। परन्तु लक्षग्रन्थानां लक्ष्यग्रन्थानां स्थितिः अद्यापि पूर्णतया न प्राप्ता | नारायण तीर्थ , मुथुस्वामी दीक्षितर , स्वाति तिरुणाल इत्यादीनां सङ्गीतसम्बद्धाः लक्ष्यकृतयः (निबन्धानां रचनाः) सर्वकालिकसङ्गीतस्य कृतित्वेन स्वीकृताः सन्ति |. तथापि अद्यतनपीढीयां केचन संगीतकाराः तेषां साहित्यिकमूल्ये एतावत् ध्यानं न दत्तं चेत् दुःखदं स्यात् | प्रत्येकस्य रचनाकारस्य रचनाः गीतसङ्गीतस्य केनचित् अन्यस्मिन् वा पक्षे श्रेष्ठाः इति वक्तुं कोऽपि संकोचः न कर्तव्यः |. तेषु मुथुस्वामी दीक्षितस्य रचनाः गीतात्मकस्य उत्कृष्टतायाः सङ्गीतस्य च उत्कृष्टतायाः कृते अत्यन्तं प्रशंसिताः सन्ति , यत् तेषां प्रदर्शनस्य जटिलतायाः प्रतिदानरूपेण |.

मुथुस्वामी दीक्षितस्य रचनाः, तस्य समकालीनस्य त्यागराजस्य, स्यामशास्त्रस्य च विपरीतम् , तस्य प्रियदेवतानां प्रति भावात्मकाः स्तोत्राः न आसन् , अपितु

Since 2009
ISSN- 0976-8645
UGC RN-41039

तस्य स्थाने , तीर्थयात्रायै सः गतः मन्दिराः , यत्र विविधदेवतानां प्रबुद्धप्रार्थनाखण्डाः अपि आसन् वेदपुराणपृष्ठभूमिभिः सह ४०० तः अधिकाः रचनाः विच्छिन्नाः सन्ति इति अकल्पनीयम् |

श्री मुथुस्वामीदीक्षितस्य जीवनं कृतिं च प्रकाशं आनयने डॉ. वि. राघवन उवाच न केवलं विद्वांसः अपितु सङ्गीतस्य महान् गायकाः अपि। १ ९ ५५ तमे वर्षे रचितं महाकाव्यं १ ९८० तमे वर्षे कविस्य प्रथमवार्षिकश्राद्धदिवसस्य स्मरणार्थं प्रकाशितम् । साधुस्य रचनाकारस्य च गौरवपूर्णजीवनस्य दर्पणम् अस्ति | संगीतकाराः सङ्गीतशास्त्रज्ञाः च प्रायः मुथुस्वामीदीक्षितस्य जीवनस्य रचनानां च सन्दर्भे महाकाव्यश्लोकानाम् उल्लेखं कुर्वन्ति , तथापि दुर्भाग्यं यत् महाकाव्यस्य साहित्यिकगुणानां कृते यत् विद्वान् ध्यानं अर्हति तत् अद्यापि न प्राप्तम् |. .

संस्कृतसाहित्यरचनासु विविधविधासु , महाकाव्यं काव्ये समर्पितं वर्गम् अस्ति । अस्य महाकाव्यस्य सर्वोच्चप्रतिष्ठा अस्ति , यतः अत्र दृश्यते, शब्दावली , गद्य - अलङ्काराः , काव्य-आभूषणाः सर्वे कविं स्वस्य महत्त्वं अत्यन्तं सुरुचिपूर्णरूपेण प्रदर्शयितुं अधिकतमं व्याप्तिम् अयच्छन्ति | विश्वनाथस्य साहित्यदर्पणं नित्यं स्मरणीयं कृतिं , महाकाव्यस्य व्यापकं प्रकृतिसूत्रं सूत्रेण विमोचयति , यत् निम्नलिखितम् अस्ति :

महाकाव्यस्य[109] नायकत्वेन धीरोदत्त-नायकगुणयुक्तः उदात्तवंशस्य क्षत्रियः वा भवितुमर्हति । केषुचित् एकस्मिन् गोत्रे जायते नायकाः स्युः । प्रधान रस वु श्रृङ्गारः वा वीरः वा शान्तवा वा उपस्थिताः भवेयुः अन्ये रसाः च नैमित्तिकरूपेण अधीनरासरूपेण प्रयुक्ताः भवेयुः .लक्षणग्रन्थेषु चर्चा कृता अस्ति यत् महाकाव्यस्य पञ्च सन्धीः नाटकसन्दर्भे सन्ति |. कथानकं महाकाव्येभ्यः निष्पन्नं भवितुमर्हति , अन्यथा व्यक्तिस्य उदात्तव्यवहारः परितः भवितुं आवश्यकता अस्ति . तस्य उद्देश्यं चतुर्णां पुरुषार्थेषु अन्यतमं भवेत्। अभिवादनेन , आशीर्वादेन वा , कथानकसूचनेन वा, प्रशंसितानां विवरणेन वा, दुष्टानां निन्देन वा आरभ्यते। प्रत्येकं सर्गः समानानुप्रासस्य श्लोकैः सह संयोजितः भवेत् | प्रत्येकस्य सर्गस्य अन्तिमः श्लोकः तत्तस्य सर्गस्य विषयं सूचयति इति उच्यते | महाकाव्ये न्यूनातिन्यूनं ८ सरगाः भवेयुः | कथानकस्य , कविस्य ,

---

[109] सर्ग बन्धो महाकाव्यम् ...
पञ्चभिः संधिभिर्युक्तनाम नातिव्यख्येयमर्धिमत् ॥

Since 2009
ISSN- 0976-8645
UGC RN-41039

नायकस्य वा महत्त्वपूर्णस्य पात्रस्य नामकरणं कृतिः करणीयः, प्रत्येकस्य सर्गस्य नाम तस्मिन् वर्णितविषयस्य नामकरणं करणीयम् । अस्मिन् प्रदोष , सन्ध्या , सूर्य , चन्द्र , ऋतु , पर्वत , समुद्र , युद्ध , यात्रा , विवाह , यज्ञ आदि के विस्तृत वर्णन भवितव्यम् |

शंकराचार्येन अलवरेण च सह एकस्मिन् एव पङ्क्तौ स्थितः मुथुस्वामी दीक्षितः (1775-1835) , अस्माकं महाकाव्यनायकः वीर-शान्तनायकः च अस्ति | कदाचित् वयं वीर- शान्तं नायकं ब्राह्मणस्य वा नायकस्य वा सामान्यलक्षणं युक्तं चित्रितं प्राप्नुमः | नायकः प्रायः आर्यः , सज्जनः , बुद्धिमान् , धनिकः , सुन्दरः , यौवनः , सक्षमः , व्यापकः , कुशलः , सर्वैः प्रियः च इति चित्रितः भवति सम्पूर्णे ग्रन्थे पात्ररूपेण , अत्र द्वौ विशिष्टौ उदाहरणौ उल्लेखनीयौ स्तः |. प्रथमं सः स्वस्य अब्राह्मणशिष्यस्य थम्बियाप्पस्य कष्टानां निवारणाय अकरोत् **नवग्रह कृति सृष्टि** , ( सर्ग २३ ) द्वितीयं च **" आनन्दमृतकर्षिणी" इति** घोरे अनावृष्टौ वर्षा आनेतुं रचिता । उ ( सर्गः १५ ) उदाहरणरूपेण ते नेत्रयोः पुरतः दृश्यन्ते .

अधुना श्रीदीक्षितस्य कुलीनता , वंशावली विषये संक्षेपेण ज्ञातुं दीक्षितः काश्यपगोत्रस्य वंशजस्य श्रीरामस्वामी दीक्षितस्य पुत्रः अस्ति तथा च लोकप्रियस्य रागस्य हम्सध्वनीस्य रचयिता महान् संगीतकारः अस्ति। अस्य परमात्मनस्य प्रति जनानां प्रेम तथा तस्य कार्यकुशलता , वैभव इत्यादयः गुणाः पद्यागलोपदीयां सम्पूर्णे कार्ये गर्वेण तिष्ठन्ति।

" **संगीत-परम्परा-प्रदर्शक** " ग्रंथरत्ना सुब्बरामदीक्षितेन रचितः कर्नाटकसङ्गीतस्य विश्वकोशः, कथानकं च मुथुस्वामी दीक्षितस्य जीवनवृत्तान्तस्य आधारेण अस्ति, यत् मौखिकपरम्परया ज्ञातानां तस्य विविधरचनानां विषये आख्यानानां परिशिष्टेषु दत्तम् अस्ति साधुजीवनं परितः परिभ्रमन्तः काव्याः अवश्यमेव साधुस्य प्रधानः रसः भवन्ति , यतः ते मोक्षं लक्ष्यं कुर्वन्ति |. श्री-मुथुस्वामी दीक्षितचरितं स्वस्य नायकं बहु अद्वितीयरीत्या प्रस्तुतं करोति , अत्र नायकः केवलं ईश्वरस्य साक्षात्कारं चतुर्थस्य पुरुषस्य मोक्षस्य च विषये वर्तते यस्य भौतिककामना नास्ति।चरित्रे प्रज्ञा , वैराग्यः , शान्तिः , भक्तिः इत्यादयः of Muthuswami Dikshitha are effectively described in मुथुस्वामी दीक्षितचरितम् । शान्त -रसस्य उत्तमोदाहरणरूपेण कृतिं पाठकस्य समक्षं प्रस्तुत्य । तथैव आश्चर्य , स्नेह , दया , वीरता , भक्ति इत्यादयः अङ्ग -रसाः समुचितस्थानेषु सूक्ष्मतया प्रतिपादिताः सन्ति । अलङ्कारस्याभावः स्पष्टः । तस्य गीतानां माध्यमेन ज्ञातुं शक्यन्ते केचन अद्वितीयाः सूचनाः सन्ति ; रामस्वामी दीक्षितस्य स्वप्ने ( सर्ग 06 ) कार्तिकेयस्य

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

दर्शनम् . दीक्षितरा ( सर्ग ०९ ) इत्यत्र कार्तिकेयस्य कृपा , दीक्षितरस्य सृष्टेः ( सर्ग ०९ ) प्रतिदानरूपेण किवलूर् मन्दिरस्य द्वारं उद्घाट्य अनावृष्टेः समये वर्षा। ( सर्गः १५ ) इत्यादयः अवन्दरसस्य केचन उत्तमाः उदाहरणानि सन्ति | रामस्वामी दीक्षितस्य च चि दम्बरनाथयोगिनां मुथुस्वना मि दीक्षितस्य प्रति स्नेहस्य च कथने वात्सल्यः स्वाभाविकः इव समाहितः अस्ति। . बालुस्वामी दीक्षितानां प्रति नेता प्रेम्णः शिष्यैः संवर्धितस्य नेतारप्रेमस्य च आख्याने सर्वाधिकं सजीवरूपेण चित्रितः अस्ति |. रामस्वामीदीक्षितस्य वेङ्कटकृष्णमुदलियारस्य च मैत्री आख्याने साख्यः गङ्गा इव प्रवहति | काव्यस्य अन्ते दीक्षितस्य मृत्युपूर्वसूचकशगुनानां माध्यमेन दया सूक्ष्मतया बहिः आनयति ( सर्गः १७ ) |

श्री मुथुस्वामीदीक्षितचरितम् १७ सर्गेषु रचितं पूर्वोक्तमहाकाव्यस्य नियमानाम् अनिवार्यतया अनुरूपं भवति | प्रत्येकं सर्गः कथायाः सामान्यबोधः अनवार्थचिह्नैः सह प्रस्तुतः अस्ति | यथा , तिरुवरुरस्य विस्तृतं वर्णनं ददाति प्रथमः सर्गः श्रीपुरा **-वर्णनम्** , मुथुस्वामी दीक्षितस्य जन्मस्य महिमा वाक्पटुतया कथयति चतुर्थः सर्गः **श्री दीक्षित-पुर्यावतारकथनम्** इति कथयति , नवमः सर्गः दीक्षितस्य असाधारणशक्तेः कृते **कवितावतारपत्रवः इति कथ्यते** काव्य रचना। अपि नाम ई वेलालू दीक्षितस्य विद्वत्तायाः परिमाणस्य कृते वृत्तचित्रम् इव अस्ति . इदं रोचकं यत् प्रत्येकं सर्गस्य अनित्यतया वसंतिलकचन्दस्सीयां कविचिह्नरूपेण एकेन श्लोकेन समाप्तं भवति | महाकाव्यसर्गसङ्ग्रहेषु प्रथमद्वये पादयोः लेखकस्य परिचयः भवति ( श्री - **त्यागराज-चरणम्बुज-चञ्चा रेकाः श्रीपट्ट न भिजन-राघव-निरिम्तेस्मिन** ) अन्तिमद्वये च सर्गनाम संख्या च कथ्यते |.

अन्तिमश्लोकं विहाय अधिकांशः सर्गाः एकानुप्रासरूपेण रचिताः सन्ति , यद्यपि डॉ. वी. राघवन रेवरी इत्यस्मै स्वशैलीकारैः विभिन्नैः तालैः केचन सर्गाः लिखितुं स्वतन्त्रता दत्ता इव दृश्यते । *अनु ष्टा भ , प्रमाणिका , उपेन्द्रवज्र , उपजाति , वामसथ , स्वगत , रथोद्धत , दोढक , शाली नि , मालिनी , पंचमारा , द्रुतविलम्बिता , भुजङ्गप्रायत , शिखरिणी पृथ्वी , हरिणी , मण्डक्रान्त , दण्डक, आर्य, आर्यगती, गीती, वैतालिया , चित्रे ख , रुचिरा , ९ . Shardulavikreedita and Vasanthilaka Munthika 27* हृदयविदारकेषु छन्देषु कविस्य काव्यप्रवाहस्य आनन्दं लभन्ते ये प्रेमिणः तेषां कृते रसदौतनं भ्रष्टं न भवितुम् अर्हति

Since 2009
ISSN- 0976-8645
UGC RN-41039

कथात्मकरूपम् अर्थात् जीवनीमहाकाव्येषु कतिपयेषु वर्णनेषु सीमितव्याप्तिः भवति | तथापि कविः चतुर्वादनस्य प्रतिबिम्बः , [110]यः परेभ्यः अदृश्यम् अपि उपलभ्यते सृजति च इति किं पितृः न अवदन् ? . डॉ. राघवनः अस्य दीक्षितस्य काव्यात्मकस्य जीवनवृत्तस्य अनेकाः उत्तमदृष्टिकोणैः अलङ्कारं कर्तुं न निवर्तयति। तिरुवारुरपुरं प्रथमसर्गे ( I. 40-57) प्रसिद्धं रथपर्वं च विस्तृतं वर्णनं ददाति। सर्गः १२ मार्गे तिरुवरू - नगरस्य त्यागराज-मन्दिरम् परिसरे विद्यमानानां विविधानां मन्दिराणां सुन्दरं वर्णनं नेत्रयोः आकर्षकम् अस्ति । दीक्षितस्य जीवनस्य प्रमुखाः चरणाः भारतस्य उड्डगलायाः तीर्थयात्रायां व्यतीताः आसन् तथा च एते सर्वे विवरणाः तत्कालीनसामाजिकसांस्कृतिकविचारानाम् अभिलेखः इव सन्ति तत्तत्क्षेत्रवासिनां आध्यात्मिकजीवनस्य विस्तृतं वर्णनं वयं प्राप्नुमः | उदाहरणतया दीक्षितस्य काशीवासः ( सरग ०८ ) , केरल ' सबरीमाला तीर्थयात्रा ( सर्गः १६ ) वयं केचन आश्चर्यजनकाः क्षणाः द्रक्ष्यामः | अथो , सर्गः १५ तथा १७ तमे वर्षे ओनापी इत्यस्य स्वाभाविकं चित्रणं भवति, यत् सुन्दरं वसन्तजादू अस्ति . कैन्टो ०४ तयोः पुत्रस्य जन्म वर्णयति | Canto 17 इत्यस्मिन् एत्तयपुरमराजकुमारस्य विवाहसमारोहस्य वर्णनं भवति , तस्मिन् एव सर्गे दीक्षितस्य षष्ठ्यब्धिसमारोहस्य संक्षिप्तवर्णनम् अपि अस्ति , अतः एतत् ग्रन्थं महाकाव्यस्य सर्वाणि आवश्यकतानि पूरयति , विद्वान् कृते बाधकं न भवति ज्ञानतृष्णा।

**काव्यशैली , प्रभावाः सामान्यलक्षणं च**

सामग्रीशैल्याः प्रासंगिकता अस्ति | यतो हि एषा महाकाव्यः साधुस्य जीवनकथा अस्ति , अतः नायकस्य व्यक्तित्वानुरूपं पुरातनशैल्याः अनुसरणं अपेक्षितम् अस्ति। यस्मिन् काले ग्रन्थस्य रचना अभवत् , समकालीनपाठकानां रुचिः च भिन्ना आसीत् | अत्र डा. राघवनः नीलकण्ठदीक्षितात् प्रेरितां अप्रयत्नशैलीं अनुसृत्य अधिकांशं आधुनिकसंस्कृतग्रन्थानां इव अस्य महाकाव्यस्य अतिशयेन अलङ्कृतशैल्याः काव्यप्रतियोगितायाः प्रदर्शनात् च मुक्तं करोति | . अपरपक्षे इतिहास , पुराण , वेदान्त , धर्मशास्त्राधारितोपमरूपकादिसुन्दर अलङ्कारानाम् उपयोगेन कालिदासस्य कृतीनां भावनां प्रतिध्वनयन् प्राचीनशैल्याः लालित्यं अपरिवर्तितं वर्तते | . डॉ. राघवनस्य अप्रतिमप्रतिभायाः कारणात् महासङ्गीतकारस्य जीवनवृत्ते

[110] अपरे काव्य संसारे कविरेकः प्रजापतिः | यथास्मै रोचते विश्वं तथा इदं परिवर्तते ||

Since 2009
ISSN- 0976-8645
UGC RN-41039

अर्थान्तरन्यासा , उत्प्रेक्षा , प्रतिप , श्लोक्ति , संशय इत्यादीन् मनोग्ना अलङ्कारानाम् प्रयोगः काव्यस्य भारं ध्वनिरूपेण वर्धयति।

दुर्लभतया एव सङ्गीतस्य अवधारणानां व्याख्यानं यः अलङ्कारः भवति तस्य उपमा कविस्य विद्वान् यः तस्य शब्दावलीस्वभावस्य विश्लेषणं करोति . विशेषतः केचन उदाहरणानि एतादृशानि सन्ति

उपमा : १.

अत्र , भ्राता मुथुस्वामी। चि न्नास्वामी बालुस्वामी च , एकत्र इति कथ्यन्ते | दीक्षितः सदा तस्य भगिनी अस्ति बालम्बिकासङ्गमे महता प्रीतिभावः प्राप्नोति , एवं डमरीध्वनेन सह सम्बद्धः । गीता भावः , रागः , ताला च मिलित्वा कथं मोहयन्ति इति त्रिगुणम् |

विरामचिह्नस्य उदाहरणम्;

श्रीसंकरस्याभरणं हि क:चित यथा महाहिर्वलते दरय्य
तथायत भोगमनोहरं तद विवृण्वन् सरलं सरगम ( XII. 40)

उपर्युक्तं डॉ राघवनस्य प्रतिभायाः उत्तमं उदाहरणम् अस्ति। शङ्करभारणं भोगश्च इति शब्दद्वये यमकेन , नागस्य मन्दगत्या सह रागस्य आख्यानं तुलनां करोति। अत्र शङ्करभारणं रागस्य नाम च एतेषां नागानां उपनाम , ये शिवस्य अलङ्काराः सन्ति , परन्तु तांत्रिकार्थे भोगस्य अर्थः जपः इति। यथा वा नागस्य प्रतिबिम्बं शिरः च . अपि च अन्येषां केषाञ्चन अलङ्कारानाम् अनुप्रयोगे सङ्गीतसम्बद्धाः विविधाः अवधारणाः चित्रिताः सन्ति।

नीलकान्त दीक्षितस्य शिवलीलार्णव इव , डा. राघवनः श्री-मुथुस्वामी-दीक्षित-चरितस्य प्रथमसर्गेन स्वकार्यस्य आरम्भं वैदिकदार्शनिकां तमिलभाषायाः अग्रणीसंरक्षिकां च रेनीता अगस्त्यस्य प्रार्थनां करोति |. अयं ग्रन्थः शिवलीलार्णव इव पाण्ड्यदेशस्य महिमाम् प्रशंसति चोलदेशस्य विस्तारितं चरित्रं दातुं सफलः अभवत्। दीक्षितस्य तीर्थयात्राणां वर्णनं कृत्वा पुराणीकथाः, विभिन्नपवित्रस्थानानां काव्यसन्दर्भाः च कालिदासस्य मेघदुतस्य , वेदान्तदेशिकायाः च हमसा- संदेशस्य च स्पष्टप्रभावं प्रतिबिम्बयन्ति अयं ग्रन्थः व्यासचलस्य, विद्यारण्यस्य च शङ्करविजयस्य च अनेकधा प्रभावितः इति भासते। महाकाव्यस्य हरिकेशानल्लूर् मुत्तियाहभागवतस्य त्यागराज-विजयस्य सुन्देरेशशर्मास्य त्यागराजचरितस्य च सह अनेकाः समानान्तराः सन्ति , तथैव

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

समकालीनवाग्गेयकानां जीवनी च ५ तमः सर्गः सर्वदेव -विलासात् प्रेरितः अस्ति, यस्मिन् १८ शताब्द्याः मद्रासनगरस्य वर्णनं कृतम् अस्ति .

संस्कृतसाहित्यस्य अधिकांशः कविः , यथा । कालिदासः । श्री हर्ष भरवि , माघा । वेदान्तदेशिका । रूपगोस्वामी इत्यादयः बहुसुत्राः तर्कशास्त्रेषु , दर्शनेषु , व्याप्ताः , येषां विचाराः कविना तत्र तत्र आयाताः इव दृश्यन्ते इति शिक्षणस्य अनेकाः शाखाः पाण्डित्यम्|. अस्मिन् विषये । डॉ. वि. राघवनः कलाकलापापः इति नाम्ना प्रसिद्धः पूर्ववर्तीनां विपरीतम् सः प्रसिद्धः इति न संशयः । मुथुस्वामी दीक्षितचरितम् अपि वेद , वेदान्त , ज्योतिष , तन्त्र , आगम , इतिहास पुराण इत्यादीनां विविधविषयाणां सन्दर्भेण अलङ्कृतम् अस्ति तथा च दीक्षितस्य सृष्टिपर्यन्तं कतिपयानां नामकरणार्थम्। पारम्परिकविषयैः सह अयं महाकाव्यः १८ शताब्द्याः अस्ति शताब्दस्य परिवर्तनस्य दक्षिणभारते सामाजिक-आर्थिकजीवनस्य अपि प्रभावी चित्रणं कृतम् अस्ति .

तमिलसाहित्यस्य पृष्ठभूमितः आगत्य प्रेरितस्य जीवनस्य कृतीनां च सन्दर्भान् अन्वेष्टुं सहायकं भवति यथा तेलुगुगीतकारानाम् रचनाः प्रेरिताः आसन् | . संगीतकारस्य जीवनवृत्तान्तः इति कारणतः महाकाव्यं सङ्गीतशास्त्रस्य , संगीतकारस्य , संगीतरचनानां च तत्सम्बद्धानां कलारूपाणां च सन्दर्भैः परिपूर्णम् अस्ति । विषयस्य व्यापकं उपचारं मन्यते , एतत् महाकाव्यं ' **भारतीयसङ्गीतस्य विश्वकोशः ' अस्ति** | न तु तद् आह्वयितुं अतिशयोक्तिः। अतः अयं कार्यः शिक्षणस्य अनेकशाखानां अवगमनस्य आह्वानं करोति , यद्यपि डॉ. वि. राघवनस्य लेखनी कलात्मकरूपेण तकनीकीरूपेण च मनोहरं कार्यं निर्दोषं करोति।

विशेषतया संस्कृतसाहित्यक्षेत्रे बहु ऐतिहासिकचिन्तनशृङ्गारविषयाणि प्राप्यन्ते अत्र दुर्लभतया दृश्यते . नृवंशविज्ञानसम्बद्धाः शब्दाः कालक्रमेण विकृताः अभवन् अथवा ऐतिहासिकपुष्टिं न प्राप्यमाणानां घटनानां अतिशयोक्तिकारणात् | परन्तु श्रीमुथुस्वामी-दीक्षित- च ऋथस्य अनेकाः प्रकरणाः जीवनी अपवादाः सन्ति . अस्मिन् विशेषतया अद्यत्वे तमिलनाडुराज्यस्य भौगोलिकप्रदेशेषु स्थितानां स्वरूपं आच्छादितम् अस्ति । एतानि दृष्टान्तानि राजानसन्तादिप्रख्यातानां जीवने महत्त्वपूर्णघटनानां स्मरणेन अलङ्कृतानि सन्ति । तेषु केचन दीक्षितस्य समकालीनाः आसन्, तेषां चित्रणं २० शताब्द्याः कथाकारत्वेन कृतम् अस्ति । डॉ. राघवनः सुनिश्चितं करोति यत् स्वेन उक्ताः एतादृशाः घटनाः ऐतिहासिकरूपेण प्रामाणिकाः सन्ति , यस्य कृते सः एपिग्राफिक-साहित्य-साक्ष्ययोः उपरि अवलम्बते ।

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

डॉ. राघवनः अस्मिन् महाकाव्ये दीक्षितस्य अधिकांशसङ्गीतरचनानां यथास्थितिं चित्रयति। अत्र द्रष्टव्यं यत् दीक्षितानां रचना न तु गद्यनियमैः अपितु तालचक्रस्य लयात्मकैः।

डॉ राघवनः न केवलं दीक्षितस्य गीतानां अनुकूलनं करोति अपितु रचनानां सम्पूर्णं सारं तथैव प्रस्तुतं करोति यत् तेषां मौलिकं आकर्षणं परिचितं वा महत्त्वपूर्णं शब्दं च धारयति , तुकान्तस्य संख्यानां च नियमानाम् पुष्टिं कुर्वन् अपि। एतत् वर्धनं गीठी , उपगिति , उद्गीति , उपजाति , अरि वैतालिया , वसंततिलक इत्यादिभिः विविधैः अनुप्रासैः क्रियते | यथा , बालागोपालः, भैरवीरागस्य प्रसिद्धः ग्रन्थः

## परिशीलितग्रन्थसूची

1. मत्स्यपुराण, चौखम्बा, विद्याभवन, 2001.
2. मनुस्मृति, चौखम्बा विद्याभवन वाराणसी, 2007.
3. मार्कण्डेयपुराण, चौखम्बा विद्याभवन, वाराणसी, 2009
4. श्रीपद्ममहापुराण, आनन्दाश्रम संस्कृत ग्रन्थमाला,1921
5. श्रीमद्वाल्मीकीयरामायणम्, गीताप्रेस गोरखपुर, वि.स. 2056
6. पतंजलिकालीन भारत, अग्निहोत्री डॉ. प्रभुदयालु, ईस्टर्न बुक लिंकर्स दिल्ली, द्वितीय संशोधित संस्करण 2007

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

# वसुधैव-कुटुम्बकम्'आलक्ष्य वैदिकवाङ्मये राष्ट्रतत्त्वस्य सन्दर्भः

डॉ. श्रुतिकान्त पाण्डेयः[158]

**प्रमुखशब्दाः** - वैदिकवाङ्मयः, राष्ट्रम्, भारतम्, वैदिकराष्ट्रम्।

**शोधसारः**-स्वतन्त्रतायाः अमृतकाले यदा भारतं विश्वगुरुपदं पुनरधिगन्तुं सजवं प्रयतते तर्हि केचन भारतीयया ज्ञानपरम्परया अनभिज्ञजनाः आक्षिपन्ति यदांग्लानां आगमनपूर्वं तु अखण्डभारतस्य सन्दर्भः केवलं साहित्यिकविमर्शेष्वेव उपलभ्यते स्म। परमस्मिन् शोधलेखे प्रस्तुतेषु तथ्येषु भारतीयराष्ट्रस्य सर्वेऽपि पक्षाः सम्यगुद्घाटिताः। भारतं साम्प्रतं केवलं भूभागरूपेण ख्यायते यद्यपि पुराप्रसंगेषु एतत् ज्ञानपिपासूनां संघटनत्वेन इंगीयते स्म, येषामावासः विश्वस्य कस्मिंश्चिदपि प्रदेशे भवितुमर्हति स्म।
आधुनिकवैश्वीकरणः आर्थिकः वाणिज्यिकश्च सन्दर्भः अस्ति, यस्यान्तर्गतं विश्वस्य अन्ये देशाः परस्परं आर्थिकोपभोगानां, वस्तूनां, सेवादीनां विनिमयमालक्ष्य केन्द्रीकृताः सन्ति। एवं आधुनिकवैश्वीकरणं मुख्यतया व्यापारसन्दर्भे भवति, परं वैदिकसंकल्पनायां मानवभावः विश्वबन्धुत्वं च वैश्वीकरणस्य केन्द्रे अवर्तमाम्। अस्मिन् सन्दर्भे वैश्वीकरणं सर्वेषामेव मानवानां प्रति संवेदनशीलतां, अनुकूलतां च सुनिश्चितं करोति ।
भारतीयं वैश्वीकरणं तु वस्तुतः दार्शनिकसन्दर्भः अस्ति। एतच्च सर्वेषां मानवानाम् वैचारिकजागरणं सुनिश्चितं कर्तुं सर्वभावेन समर्थः अस्ति। अस्मिन् अर्थे 'वसुधैव कुटुम्बकम्' इत्यवधारणा वैदिकसंहितासु प्रस्तुताऽस्ति। ऋग्वेदस्य पुरुषसूक्ते न केवलं सर्वे मानवाः अपितु अन्येऽपि प्राणिनः ब्रह्मस्वरूपाः मन्यन्ते। वैश्वीकरणस्य एतावतं उन्नतं सक्षमं च विवरणं अन्यत्रावाप्तुं न शक्यते।

====================================

मानवसभ्यतायाः विकासः विस्तारश्च अनेकतत्त्वेषु आश्रितः वर्तते। एतेषु अन्यान्याः भौतिकाऽभौतिकाः, मानवीयाः प्राकृतिकाः वा घटकाः संवलिताः भवन्ति। एतेषां सर्वेषामेव तत्त्वानां उपस्थितिः सत्यपि राष्ट्रस्य उदयः तावत्पर्यन्तं

[158] सहाचार्यः, एमिटी-संस्कृताध्ययनं अनुसन्धानसंस्थानम्, एमिटी-विश्वविद्यालयः सेक्टर 125, नोएडा।

Since 2009
ISSN- 0976-8645
UGC RN-41039

असम्भवः एव तिष्ठति यावदेतेषां समायोजनं कर्तुं समर्था चिन्तनशक्तिः नैव वर्तते। भारतीयदृष्ट्या राष्ट्रस्य विचारः राष्ट्रवादस्य चोपस्थितिः वैदिककालेनैव प्रतिबिम्बिता इति सौभाग्यस्य विषयः। प्रस्तुते पत्रे वैदिकसाहित्ये राष्ट्रस्य उत्पत्तिः, व्युत्पत्तिः, परिभाषया च साकमेव राष्ट्रस्य विविधायामाः, व्यावहारिकसन्दर्भाः च उल्लिखिताः सन्ति।

वैदिकसाहित्ये प्रतिबिम्बितं राष्ट्रं आधुनिकसन्दर्भेभ्यः सर्वथा भिन्नं अवर्तत। तस्यां परिभाषायां राष्ट्रस्य आधुनिकेन स्वरूपेणातिरिच्य अन्तर्राष्ट्रीयत्वं विश्वमानवत्वं च समाविष्टं भवति स्म। वैदिकवाङ्मये प्रतिपादिते भारतराष्ट्रे देशभावः "यत्रविश्वं भवत्येकनीडम्' ' इति भावेन उत्पन्नः जायते स्म, यत्र जगतः सर्वेषां प्राणिनां कृते एकपरिवाररूपेण सुखं, आरोग्यं, कल्याणं, सौभाग्यं च प्रार्थितमस्ति।

भारतीयराष्ट्रवादस्य एतदद्भुतं वैशिष्ट्यं वर्तमानपत्रेण रेखांकितमस्ति। अद्य भारतं विश्वनेतृत्वं कर्तुं सन्नद्धं भवति, परं वस्तुतः त्वेषः मनुस्मृतियुगे एव आत्मानं विश्वनेतृरूपेण घोषयति स्म, यत् पृथिव्याः सर्वे जनाः, अस्मिन् देशेनिवसतां प्रमुखानां विदुषां शरणमागत्य आत्मनः ज्ञानं व्यवहारं च परिष्कारयन्तु। एषः एव वैदिक वाङ्मये भारतराष्ट्रस्य विश्वराज्यस्य च आधारः।

वेदाः तु सुनिश्चितमेव नकेवलं भारतवर्षस्य अपितु अखिलविश्वस्य प्राचीनतमाः कृतयः सन्ति। अस्य चत्वारो संहिताः परमात्मप्रदत्ताः अखिलस्य च ज्ञानविज्ञानस्य आदिस्रोतरूपेण स्वीक्रियन्ते मनीषिभिः। परम्परया मन्यते यद्वैदिकवाङ्मये चतसृभिः संहिताभिः साकमेव आधृतानां ग्रन्थानामपि समावेशः भवति। अनेन न्यायेन ऋग्यजुस्सामथर्वेन संहितासमूहेन साकं ब्राह्मणारण्यकाः उपनिषदाश्चापि वैदिकवाङ्मयस्य अंशभूताः अधिगम्यन्ते। एतेषु ब्राह्मणाः संहितानां व्यवहारोपदेशकाः, आरण्यकाः अध्यात्मोत्प्रेरकाः उपनिषदाश्च दार्शनिकचिन्तनोद्भावकाः सन्ति। वेदास्तु सर्वप्रकारकस्य ऐहिकाध्यात्मिकस्य ज्ञानविज्ञानस्य आदिमूलत्वेन मानवजीवनस्य मार्गदर्शकाः वर्तन्ते। तेभ्यः एव व्यक्ति-समाज-राष्ट्राणां समस्तविषयानां संकेतज्ञानं गृहीत्वा विद्वज्जनैः नैकविधाः व्यवस्थाः स्थापिताः संचालिताश्च। शोधपत्रेऽस्मन् अनुमोदितमस्ति यत् राष्ट्रस्य पारम्परिका अवधारणाऽपि वैदिकवाङ्मये दरीदृश्यते।

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024

Since 2009
ISSN- 0976-8645
UGC RN-41039

**वैदिकराष्ट्रस्वरूपम्**

मानवानां तेषां च समाजस्य प्रगतेः समृद्धेश्च कृते राष्ट्रे शान्तिः स्थिरता चात्यावश्यं स्थापनीयं भवति। राष्ट्रस्य निर्माणं न केवलं भूप्रदेशेन प्राकृतसंसाधनैश्च भवति अपितु ज्ञान-कौशल-कर्तव्यभावेन स्वराष्ट्रं संघटितुं तं च प्रति आत्मनः कर्त्तव्यानां निर्वहणे सक्षमाः नागरिकैः अपि भवति। यदा एवम् भवति तदैव दीप्त्यर्थकेन 'राज' धातुना औणादिकेन 'ष्ट्रन्' प्रत्ययस्य संयोगेन 'राष्ट्रः' शब्दस्य व्यत्पत्तिः जायते। एवमुद्भूतेन राष्ट्रशब्देन "राजते दीप्यते प्रकाशते शोभते इति राष्ट्रम् " इत्यर्थः प्रकाशितः जायते। एवं सत्येव राष्ट्रशब्दाभिधेयस्य भूभाग-नागरिक-ऐक्यभावैः समन्वितस्य अभिधेयस्य स्वरूपः स्पष्टः जायते। ईदृशमेव राष्ट्र वस्तुतः वैभव-शक्तिः-सम्प्रभुताभावैः समयोजितः भवितुमर्हति। संस्कृते बृहत्कोशे यद्यपि राष्ट्रस्य अर्थः 'जनपदः' इत्यस्ति तथापि तस्मिन् भूमिप्रजानां अन्तर्भावः सहजतया भवत्येव। कालान्तरे अस्याः संज्ञायाः अन्तर्गतं राज्यं, साम्राज्यं, देशः, वृत्तम् इत्यादीनां प्राकृतानां शब्दानां प्रयोगः प्रचलितः अभवत्। तथ्यमिदं हि डॉ.सूर्यकान्तस्य वैदिकसूचकांकेन अपि पुष्टः भवति, यस्मिन् उक्तमस्ति यत् ऋग्वेदेषु पश्चाद्वर्तिषु च ग्रन्थेषु प्रयुक्तः राष्ट्रशब्दः वस्तुतः राज्यं वा साम्राज्यं वा निर्दिशति न तु लघुप्रदेशान्।

अस्य अग्रिमचरणरूपेण ब्राह्मणग्रन्थेषु प्रजाः, भूधनं, विद्वांसः, प्राकृतिकसंसाधनाः च राष्ट्रस्य भागत्वेन स्वीकृताः आसन्। वैदिकसाहित्ये राष्ट्रसंकल्पनायाः उपस्थितिः न केवलं उपर्युक्तैः खण्डैः सिद्धा भवति, अपितु तस्य अवयवाः लक्षणानि च प्रतिष्ठितानि सन्ति। डॉ. वासुदेवशरण अग्रवालः 'पाणिनीभारतम्' इति शोधग्रन्थे अनेकैः उदाहरणैः राज्यसत्तासन्निधिं सूचितवान्। एतेभ्यः उद्धरणेभ्यः स्पष्टं भवति यत् वैदिककाले न केवलं राष्ट्रस्य भावः प्रसिद्धः आसीत्, अपितु समग्रं जगत् एकमेव इति मत्वा मानवजातेः कल्याणं काम्यते स्म। अनेन भावेन समन्वयिताः बहवः मन्त्राः वैदिकसाहित्येषु प्रचुरतया उपलब्धाः भवन्ति।

**वैदिकराष्ट्रस्य वैशिष्ट्यम्**

वैदिकराष्ट्रस्य अवधारणायां राष्ट्र प्रति आत्मीयभावः केन्द्रत्वेन स्थापितः परिलक्षितः भवति। राष्ट्रं प्रति अनन्यभावः, संघटनं, ऐक्यं चास्य सहोदराः सन्ति। अनया प्रेरणया समन्वितैः मुनिभिः तावद्भूतानां सहैव अनागतानां अपि

Since 2009
ISSN- 0976-8645
UGC RN-41039

सन्ततिनां आत्यंतिकं कल्याणं हृदि संधार्य दिव्यं वैदिकज्ञानं अग्रेषितम्। अस्मिन् क्रमे वैदिकसंस्कृतेः प्रवर्तकैः दार्शनिकैः ब्राह्मणग्रन्थाणां आरण्यकानां:, उपनिषदानां च व्याख्याः उपस्थापिताः। अस्य साहित्यस्य आधारेणैव आर्यवर्तस्य भारतराष्ट्रस्य वा रूपं सहस्राब्दपर्यन्तं भास्वरं अनुकरणीयं चाऽभवत्। अस्य समग्रस्य राष्ट्रवादस्य प्रवर्तकैः देशवासिभिः सह तत्रत्याः पशु-पक्षि-वनस्पतयः चापि राष्ट्रतत्त्वस्य घटकरूपेण पुष्टीकृताः आसन्। अनेन स्वीकरणेन राष्ट्रभावः न केवलं सर्वसमावेशी अपितु सर्वथा दृढः सुस्थापितश्च भवति। अस्मिन् सन्दर्भे अथर्ववेदस्य राष्ट्राभिवर्धनसूक्तस्य ऋषिणा राज्ञः सहैव एतेषां समस्तानां संघटकानामपि उल्लेखः विहितः अस्ति।

**वैदिकवाङ्मये राष्ट्रतत्त्वनिरूपणम्**

वैदिकसंहितासु राष्ट्रतत्त्वस्य संकल्पना अतीव स्पष्टतया विस्तृतरूपेण च प्रतिष्ठिता अस्ति। ऋग्वेदे विविधेषु प्रसङ्गेषु राष्ट्रशब्दः अष्टस्थानेषु उल्लिखितः अस्ति। क्वचित् राजा, सेना, जनश्च राष्ट्रस्य अत्यावश्यकेन तत्त्वरूपेण स्वीकृताः, क्वचित् च विद्वांसः, गावः, कृषकाः च राष्ट्रस्य आधारत्वेन वर्णिताः। न केवलम् एतत्, अपितु, ज्ञानवैभवादि आधिभौतिकानां प्राप्तव्यानां अवाप्त्यर्थं आयोजितेषु यज्ञेष्वपि राष्ट्रतत्त्वस्य सम्मानः स्तुतिश्च जायते स्म। यजुर्वेदे आचार्याः पुरोहिताः वा राष्ट्रस्य आधाररूपेण उच्यन्ते, ते च राज्ञः प्रजानां च मध्ये सेतुरूपेण स्थापिताः इत्येवं व्याख्यातमस्ति। अतः परमपि यजुर्वेदे आदर्शराष्ट्रस्य अवधारणाम् अभिव्यंजयन् ज्ञानसम्पन्नानां ब्राह्मणानां, पराक्रमयुतानां क्षत्रियाणां, द्रुतगतिनाम् अश्वानाम्, दुग्धगवानां, स्त्री-पुरुषाणां च, उत्तमजलवायोः, दयालुमेघानां च कृते ईश्वरः प्रार्थितः अस्ति, येन राष्ट्रस्य सर्वे नागरिकाः उन्नताः, सभ्याः च भवन्तु, राष्ट्रे सर्वेषां कल्याणं भवतु, सर्वे च स्वेषु कार्येषु सहजतया निरताः भवन्तु, इति। यस्मिन् राष्ट्रे राजा प्रजाः लोकसेवकाः सैनिकाः वैद्याः इत्यादयः स्व-स्वकार्यं सम्यक् कुर्वन्ति, तत्र पृथिवी, समुद्रः, पर्वताः, नदीः, औषधयः वनस्पतयः चापि तेषां समृद्ध्यर्थं तत्पराः भवन्ति। यदा एतत् भवति तदा ब्रह्मक्षत्रयोः, अर्थसेवानां च शक्तिविस्तरेण राष्ट्रस्य प्रगतिः सत्वरा भवति। तं च राष्ट्रं प्रति कस्यचिदपि कुदृष्टिः नैव संजायते।

वैदिकराष्ट्रवादस्य स्पष्टतमं रूपं अथर्ववेदे दरीदृश्यते। अस्यां संहितायां संकलितेषु मन्त्रेषु राष्ट्रस्य बहवः मूर्ताः अमूर्ताः च घटकाः प्रकाशिताः सन्ति। एतेषु अर्थशक्तिः, सैन्यबलं, ज्ञानदीप्तिः, नागरिकभावश्च अन्यतराः सन्ति। एतानि तत्त्वानि वैदिकराष्ट्रस्य स्वरूपं भव्यं, गौरवास्पदं, सर्वस्वीकृतं च कुर्वन्ति।

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

अस्मिन् क्रमे निरुक्ते राष्ट्रस्य मानवीकरणं कुर्वन् सर्वेषां व्यक्तपदार्थानां अस्तित्वं, आश्रयं, उपभोगं च परमात्मशक्तेः कार्यत्वेन निगदितमस्ति। अस्मिन् प्रसंगे मानवाः प्रकृतिचक्रस्य शीर्षस्थाः व्याख्यायिताः ते चास्य सर्वेषां भोग्यानां उपभोक्तृरूपेण स्थापिताः। एवं मानवानां नागरिकाणां च कल्याणं राज्यस्य परमकर्त्तव्यत्वेन ख्यापितमस्ति। अनेन कारणेन वैदिकराष्ट्रवादस्य अनेके राजनैतिकाः समाजशास्त्रीयाश्च परिप्रेक्ष्याः वेदेषु दृष्टिगोचराः भवन्ति, इति अथर्ववेदस्य भूमिसूक्ते दृश्यते।

वेदेषु मानवानां सार्वत्रिकं कल्याणं सुखसौभाग्य-उपस्थापनं च राज्यस्य लक्ष्यत्वेन स्थापितं अस्ति। अनया दृष्ट्या गरुडपुराणे व्यक्ता कामना बीजमन्त्रत्वेन स्वीकर्तुं शक्यते। अनयैव कामनया वैदिकवैश्विकीकरणस्य बींज उद्भूतं भवति यस्य परिणतिः ''वसुधैव कुटुम्बकम्' ' सदृशानां अवधारणानां उद्भवः विकासश्च भवति। अस्य वैश्वीकरणस्य आधारः सर्वेभ्यः मानवेभ्यः आत्मनः दायित्वानां सम्यकरीत्या निर्वहणेन सृदृढः जायते् यथा यजुर्वेदे नैकेषु मन्त्रेषु उपस्थापितम् अस्ति। तेषां आदेशः उपदेशश्च चास्ति यत् सर्वेषामेव वर्णाश्रमाणां अनुपालकैः स्वीयानां दायित्वानां निर्वहणेन आत्मनः अन्येषानां च मानवानां, मानवेतरणां च प्राणिनां आत्यन्तिकं कल्याणं अवश्यं सम्पादनीयं। अनया व्यवस्थया न केवलं राज्ये शान्ति-व्यवस्था सुदृढा भवति अपितु राष्ट्रस्य प्रगतिः समृद्धिश्च सुनिश्चिता जायते।
यजुर्वेदस्य सम्पूर्णे षट्त्रिंशत्तमे अध्याये संकलितेषु मन्त्रेषु अपि एतादृशी एव भावना अनुस्यूता वर्तते। अस्मिन् शान्तिसूक्ते जगतः सर्वशक्तयः जीवनानुकूलाः शान्तिपूर्णाः च भवेयुः इति प्रार्थितं अस्ति। शान्तिमन्त्रस्य नाम्ना विख्याते एकस्मिन् मन्त्रे प्रार्थितमस्ति यत् प्रकाशः, अन्तरिक्षं, पृथिवी, जलं, औषधयः, वनस्पतयः इत्यादयः शान्तिकराः भवन्तु इति। एताभिः प्राकृतिकैः भौतिकैः वा घटकैः सहैव मनः, वाणी, विचारः, बुद्धिः इत्यादीनां मानवानां आन्तवर्तिनां तत्त्वानां अपि शान्तीकरणस्य अनुरोधः यजुर्वेदे एव अवाप्यते। तत्र च विज्ञापितमस्ति यत् बहिरन्तरभूर्तानां अवयवानां शान्त्या एव राष्ट्रे समग्रशान्तिः सम्भाविता भवति। अस्यैव वेदस्य एकादशमे अध्याये मनुष्याणां जीवनेषु कल्याणं सुनिश्चितिकर्तुं अग्नितत्त्वस्य प्राधान्ये प्रकृतेः पंचमहाभूताः प्रार्थिताः वर्तन्ते। अथर्ववेदे यत् सुप्रसिद्धा उद्घोषणा 'मातभूमिः पुत्रोऽहं पृथिव्याः' इति पद्यांशस्य माध्यमेन विहितास्ति, तेन संकेतितः भवति यदत्र समग्रमेव विश्वं

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024

Since 2009
ISSN- 0976-8645
UGC RN-41039

मातृरूपेण, सर्वे च मानवाः प्राणिनः वैतस्य सन्तानत्वेन स्वीकृताः। अनेनानि छन्दांशेन वैदिकसाहित्ये संकेतितस्य विश्वराष्ट्रस्य अवधारणा स्पष्टा जायते।
यजुर्वेदस्य अनेकेषु मन्त्रेषु मानवानां राष्ट्रस्य च मध्ये यज्ञीयं बन्धनं स्थापितं प्रकीर्तितं अस्ति। अत्र राज्यस्य आध्यात्मिकं स्वरूपं प्रस्तुतकर्तृभिः ऋषिभिः विषयाणां अथवा प्रजानां कृते अभ्युदय-निःश्रेयसयोः अवाप्तिं सुनिश्चितं कर्तुं विदुषां पुरोहितानां दायित्वं निर्धारितं आसीत्। अत्र ''राष्ट्रदेवो भव'' इत्यस्य भावस्य उपासकानां ब्राह्मणानां दायित्वं राष्ट्रस्य शाश्वतं कल्याणं अवर्तत। यजुर्वेदस्य नवमे अध्याये उक्तं अस्ति यत् एतादृशाः एव आचार्याः, वैद्याः, मन्त्रिणः च राज्ञा संरक्षणीयाः भवन्ति, ये हि विद्वांसः, बुद्धिमन्तः, स्वस्थाः, सद्गुणैः सम्पन्नाः, सुललिताः च भवन्ति, यतोहि तेषामेव मार्गदर्शनेन राज्यस्य कल्याणं अभिवर्धनं च सुनिश्चितं भवितुमर्हति। एतेभ्यः एव ज्ञान-विद्या-विवेक सम्पन्नेभ्यः अधिकारिभ्यः राज्याधिकारं दत्त्वा राज्यहिताय नियुक्ताः करणीयाः। एतादृशायां चाऽवस्थायां वेदानाम् अध्ययनेन अध्येतृणां ज्ञानं वर्धते, राष्ट्रस्य सर्वविधः सर्वांगीणश्च विकासः सुनिश्चितः जायते।
वैदिकयुगे सर्वेऽपि जनाः समग्रामेव पृथिवीं स्वमातरं, आत्मानं च पृथिवीपुत्रं/पुत्रीं मन्यन्ते स्म। एतेन विस्तृतचिन्तनेन व्यवहारं कुर्वद्भ्यः तेभ्यः भ्रातृत्वं भगिनिभावश्च सपूर्णविश्वस्य मानवेभ्यः समवर्तत। अनेनैव कारणेन तस्मिन् समये सर्वत्र शान्तिः सुव्यवस्था च आसीत्। अद्य तु तस्य साम्यस्य अभावेन सर्वत्र संकीर्णत्वं स्वार्थत्वं च दरीदृश्यते। यदि अद्यापि विश्वमानवत्वं अपेक्षितं भवेत्तर्हि, वैदिककालस्य राष्ट्रियभावः अपरिहार्यः प्रासंगिकः चास्ति। अनया भावना सह मनुष्यः यथार्थतया मानवः भवितुम् अर्हति, येन मानवीयजीवनं जीवित्वा सः न केवलं सृष्टेः मुकुटमणिः भूत्वा सर्वेषां मार्गदर्शनं करिष्यति, अपितु विश्वकुलस्य स्थापनायां अपि महत्त्वपूर्णः सिद्धः भविष्यति।
वैदिके वाङ्मये राष्ट्रस्य संकुचितभावं उपेक्ष्य सार्वभौमस्वरूपस्य व्याख्यानं अवाप्यते। वैदिकसमये विविधानां मत-पंथ-जाति-समुदायानां अस्तित्वं तु नाऽवर्तत, परं वैचारिकं वैभिन्यं सहजतः विद्यमानं अवर्तत। तत्र स्वमतं प्रति आग्रहस्य स्थाने सत्यमतस्य अंगीकरणं सर्वेभ्यः स्वीक्रियते स्म। अनेनैव कारणेन वैचारिकः बहुलवादः अथवा सार्वभौमवादः साक्षात्प्रत्यक्षम् अवर्तत। एतेन नागरिकाणां पारस्परिकं अंगीकारभावं सौहार्दं च परिपुष्टं भवति। वर्तमान कालेऽपि स्वीक्रियते यत् राष्ट्रस्य दृढतायै विकासस्य च कृते सामाजिकस्य ऐक्यस्य भ्रातृभावस्य च आश्यकता भवति। एवमेव देशस्य प्रगतेः कृते जनानां मध्ये राष्ट्रियभावस्य अस्तित्वमपि अनिवार्यं कथ्यते, यतः नागरिकाणां मध्ये

Since 2009
ISSN- 0976-8645
UGC RN-41039

आत्मीयतायाः व्याप्तिः राष्ट्रियभावेन सह वर्धते, येन तस्य संकीर्णः स्वार्थः नियन्त्रितः भवति। वैदिक ग्रन्थेषु एतेषां सर्वेषामेव भावानां अवाप्तिः मानवानां वैयक्तिकस्य, सामाजिकस्य च विकासस्य कृते उपदिष्टास्ति। एतेनैव हि राष्ट्रस्य उन्नतिः अपि सुकरा जायते।

## परिशीलितग्रन्थसूची


- अग्रवाल, महावीर, वैदिक संहिताओं में राष्ट्रवाद, अग्रवाल प्रकाशन, सहारनपुर 1995
- आप्टे, वामन शिवराम, वैदिक चिन्तन, स्वामी सप्तानन्दन वैदिक शोध संस्थानम् मथुरा, 1986
- देव, राधाकान्त, शब्द कल्पद्रुम्, नागा प्रकाशक, दिल्ली 1987
- द्विवेदी, कपिलदेव, वेदाऽमृतम् विश्व भारती शोध परिषद्, वाराणसी 1994
- वाचस्पति, तारानाथ, वाचस्पत्यम् चौखम्बा संस्कृतमाला, नई दिल्ली, 1996
- वेदवाचस्पति, प्रियव्रत, वेदों के राष्ट्रगीत, स्वामी श्रद्धानंद अनुसन्धान प्रकाशन केन्द्र, हरिद्वार, 1989
- शर्मा श्रीराम आचार्य, अथर्ववेदभाष्य, ब्रह्मवर्चस प्रकाशन, हरिद्वार, 1995
- शर्मा, मुन्शीराम, वैदिक चिन्तामणि, विश्वविद्यालय प्रकाशन, नई दिल्ली, 1998
- शास्त्री, वेदप्रकाश, श्रुति मंजरी, परिमल प्रकाशन, दिल्ली, 2006

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

# शब्दार्थयोः सम्बन्धमीमांसा

**डा स्वीटी रानी**

**प्रमुखशब्दाः** - भगवान् पाणिनिः, शब्दार्थसम्बन्धः, स्मर्ता, भाष्यकारकात्यायनः, वार्तिकः, विग्रहः

**शोधसारः-** व्याडिविरचिते संग्रहनामके ग्रन्थे शब्दानां नित्यानित्यत्वयोर्गुणदोषाः सम्यक् विचारिताः परन्तु ग्रन्थोऽयं अधुना नोपलभ्यते। परन्तु अस्य पङ्क्त्यः बहुधा दृश्यन्ते। तदा प्रश्नो विद्यते भगवान् पाणिनिशब्दार्थ-सम्बन्धानां स्रष्टा स्मर्ता वा इति प्रश्नः। मन्येहं भगवान पाणिनिः शब्दार्थ-सम्बन्धानां स्रष्टा न आसीत्। शब्दार्थ-सम्बन्धानां स्मर्ता आसीत्। अस्मिन् विषये भगवता भाष्यकारेण [159]कात्यायनीयं प्रथमवार्तिकं प्रस्तुतं "सिद्धे -शब्दार्थ-सम्बन्धने इत्यस्य विग्रहो भवति। शब्दश्च अर्थश्च सम्बन्धश्च एतेषां समाहारः शब्दार्थ - सम्बन्धः तस्मिन् शब्दार्थसन्बन्धने पुनः शब्दे च अर्थे च तयोः सम्बन्धे सिद्धे सति आचार्यपाणिनि स्वव्याकरणशास्त्रं रचयामास।

==================================

सिद्ध शब्दस्य अर्थे, शास्त्रे लोके च सिद्धशब्दः नित्यानित्यार्थेषु दृश्यते। अत्र सन्देहो दृश्यते। वस्तुतः सिद्धशब्दस्य अर्थः कः इति विचारः अस्मिन् व्याख्याने दर्शयामि लोके सिद्धः शब्दः अनित्यार्थेषु दृश्यते। यथा - सिद्धः सूपः सिद्धम् ओदनं सिद्धा यवागू इति तथा च शास्त्रे पृथिवी सिद्ध द्यौः लइति अत्र सिद्धः शब्दस्तु कूटस्य अविचालि अस्मिन् वार्तिके सिद्ध शब्दः कस्मिन् अर्थे विद्यते। अस्मिन् विषये

[159] कात्यायनीयं वार्तिकं महाभाष्यम्।

Since 2009
ISSN- 0976-8645
UGC RN-41039

वार्तिके सिद्ध शब्दः कस्मिन् अर्थे विद्यते।अस्मिन् विषये भगवता भाष्यकारेण चत्वारि समाधानानि दत्तानि।

1. प्रतिद्वन्दितया सिद्धशब्दः प्रयुक्तः यथा भाष्ये संग्रेहे तावत्कार्यप्रतिद्वन्दितभावान्मन्यामहे नित्यपर्यायवाचिनो ग्रहणमिति इहापि तदेव ||[160]

2. कुत्रचित् एकपदान्यपि अवधारणानि भवन्ति । यथा अब्भक्षः वायुभक्षः इति इत्यत्र अप: एव भक्षयति वायुमेव भक्षयति इति गम्यते। सिद्धि एव न साध्य अत्र यथा एवकारं बिना अवधारणार्थस्य प्रतीतिर्भवति। तथैव प्रकृतेऽपि सिद्धेऽव न तु साध्यं कार्यं इति अवधारणं बोध्यम्।

अथवा पूर्वपदलोपोऽत्रद्रष्टव्यः यथा अत्यन्तसिद्धः सिद्ध इति।

3. [161]पूर्वं तु अत्यन्तसिद्धेः शब्दार्थसम्बन्धने इति वार्तिकम् आसीत्। परन्तु अत्र पूर्वपदम् अत्यन्तसिद्ध शब्दस्य लोपः दृश्यते । वस्तुतः अत्र सिद्धशब्दस्य अर्थो नित्यः वर्तते। यथा भाष्योदाहरणेषु पूर्वपदस्य लोपे दृश्यते। यथा देवदत्तो दत्तः सत्यभामा भामति ।[162] अथवा व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणम्।[163]

4. [164]एवञ् च सिद्धः शब्दः नित्यपर्यायवाची व्याख्यानाय सन्देहो निवारणीयः। यद्यपि उपरोक्तवार्तिके सिद्धे शब्दार्थसम्बन्धे इत्यत्र मन्येऽहं सिद्धशब्दस्तु नित्यः। तदा सिद्धे शब्दार्थसम्बन्धे इत्यस्य स्थाने नित्ये शब्दार्थसम्बन्धे इत्येव भविष्यात

[160] महाभाष्यं पस्पशाह्निकम्।
[161] महाभाष्यं पस्पशाह्निकम्।
[162] महाभाष्यं पस्पशाह्निकम्।
[163] परिभाषेन्दुशेखरः। (परिभाषा)
[164] महाभाष्यं पस्पशाह्निकम्।

Since 2009
ISSN- 0976-8645
UGC RN-41039

व्यायानस्य आवश्यकतापि न भविष्यति। अत: नित्यशब्दस्य प्रयोगे लाघवं प्रतीयते।[165] तथापि नित्यं प्रहसितः नित्यं प्रजल्पितः इत्यादौ नित्यशब्दस्यापि प्रयोग: कार्यार्थे दृश्यते। सिद्धे शब्दार्थ-सम्बन्धे इत्यत्र वार्तिके नित्यशब्दस्य उपादानेपि व्याख्यानस्य आवश्यकता दृश्यते । यथा लोके नित्यानित्यस्थलेषु नित्यशब्दस्य प्रयोगो दृश्यते । यथा - नित्यशब्दो नावश्यं कूटस्थेष्विचालिषु भावेषु वर्तते। अभीक्ष्ण्येपि वर्तते। [166]नित्यं आकाशं नित्यापृथिवी नित्या द्यौः इति। एवञ्च लोके अनित्यार्थेऽपि नित्यशब्दस्य प्रयोगो दृश्यते। यथा - नित्यं प्रहसितो नित्यप्रजल्पितः इत्यत्र। तदा सिद्धे शब्दार्थ सम्बन्धे इत्यत्र कथं भगवता कात्यायनेन प्रयुक्त: सिद्धशब्दः इति। सिद्ध शब्दस्य प्रयोगेऽपि व्याख्यानस्य आवश्यकता दृश्यते। तथा च वार्तिके नित्यशब्दस्य प्रयोगोऽपि व्याख्यानस्य आवश्यकता दृश्यते। कथं वार्तिककारेण सिद्धशब्दः प्रयुक्तः अस्मिन् विषये भगवता भाष्यकारेण एकं वार्तिकम् उक्तम्।

**"मङ्गलार्थम्"**[167]

"माङ्गलिको आचार्यो महतः शास्त्रौघस्य मङ्गलार्थ सिद्धशब्दमादितः प्रयुक्ते। मङ्गलादीनि हि शास्त्राणि प्रयन्ते वीर पुरुषाणि च भवन्ति आयुष्मत्पुरुषाणि चाध्येतारश्च सिद्धार्थाः यथा स्युरिति ।"[168] पश्यति त्वाचार्यो मङ्गलार्थेचैव सिद्धशब्द आदितः प्रयुक्तो भविष्यति शक्ष्यामि **चैनं**

[165] महाभाष्यं पस्पशाह्निकम्।
[166] महाभाष्यं वार्तिकं पस्पशाह्निकम्।
[167] महाभाष्यं पस्पशाह्निकम्।
[168] अष्टाध्यायी सूत्रपाठ**:** 6/3/109

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

**नित्यपर्यायवाचिनं वर्णयि**तुमिति। अतः सिद्धशब्द एवोपत्तो न नित्यशब्दः।।[169]

सूत्रकृता भगवता पाणिनिना- "पृषोदरादीनि यथोपादिष्टम्" पृषोदरादित्वात् साधु स्वीकृतं। "तदशिष्यं संज्ञा प्रमाणत्वात्।"[170] इति सूत्रेण सूचितं "लुपियक्तिवदव्यक्तिवदव्यक्तिवचने [171]"लुष्योगापख्यानात" [172]योग प्रमाणे च तद्धावेज्दशनं स्यात्।[173] जनपदे लुप "ए **पूर्वोक्तसूत्रैः जायते। पाणिनिव्याकरणात्पूर्वमपि व्यवस्थितसाधुभाषा शब्दा** व्यवस्था शब्दानां नित्यत्वं द्योत्यते। वार्तिककारेण काव्यायनेन सिद्धे-शब्दार्थ-सम्बन्धे सिद्धं तु नित्यशब्दत्वात् इति वार्तिकाभ्यां तथा च भगवत्ता भाष्यकारेण पतंजलिना च संग्रहे एतत् प्राधान्येन परीक्षितं नित्यः शब्दाः नित्येषु शब्देषु कूटस्थैरविचारविचालिभिः[174] भवितव्यम् तथा च "सर्वे सर्वपदादेश दाक्षीपुत्रस्य पाणिने एकदेशविकारे हि नित नोपपद्यते।।[175] एकः इन्द्रशब्दः क्रतुरात्वे प्रादुर्भूतो युगपत् नित्यत्वं उक्तं भाष्यकारेण तथा अन्ये स्मृति कारोऽपि वदन्ति। [176]भगवता कृष्णेन गीतायाम् उक्तम्- अष्टमेऽथ ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् यः प्रयातित्यजन्देहं स याति परमी गतिम्।[177] रामेतिद्धयक्षरं नाम

---

[169] अष्टाध्यायी सूत्रपाठ**:** 1/2/53
[170] अष्टाध्यायी सूत्रपाठ: 1/2/51
[171] अष्टाध्यायी सूत्रपाठ: 1/2/54
[172] अष्टाध्यायी सूत्रपाठ: 1/2/55
[173] अष्टाध्यायी सूत्रपाठ: 4/2/81
[174] महाभाष्यवार्तिकं पस्पशाहिनकम् ।
[175] महाभाष्यम्।
[176] महाभाष्यम्।
[177] श्रीमद्भगवद्गीतायाम्।

मानभाङ्गांपिनाकिन: वस्तुतः अक्षरद्वयेन पिनाकिनः दर्शना शब्दार्थयोः अभेदः तादात्मयं च स्पष्टं प्रतीयते । लोके शब्दार्थयोरभेदसम्बन्धः प्रतीयते यथा शब्दार्थयोस्तादात्म्यादेव श्लोकमश्रृणोदयमर्थ श्रृणोति अर्थं वदति इत्यादिव्यवहारः। तादात्म्यं च तदभिन्नत्वे सति तदभेदेनप्रतीयमानत्वमिति भेदाभेदसमनियतम। अभेदस्याध्यस्तत्वाच्च न तयोर्विरोधः।[178] पूर्वोक्तव्याख्यानेन अस्माभिः वक्तुं शक्यते । शब्दो नियतः अर्थो नित्यः सम्बन्धो नित्यः इत्याशयेन भर्तृहरिणा वाक्यपदीयग्रन्थे उक्तम् - नित्याशब्दार्थसम्बन्धानां समान्ता महर्षिभिः[179] सूत्राणि अनुतन्त्राणी भाष्याणाञ्चेति प्रणेतृभिः व्याकरणशास्त्राणाम् अनुशीलनेन ज्ञायते। शब्दार्थयोरभेदः सम्बन्धो विद्यते तथा च पूर्वाचार्यैः सर्वैः स्वीकृतः शब्दो नित्यः अर्थो भिन्नः तयोः सम्बन्धोऽपि नित्या विद्यते।

## परिशीलितग्रन्थसूची


- वाचस्पति, तारानाथ, वाचस्पत्यम् चौखम्बा संस्कृतमाला, नई दिल्ली, 1996
- वेदवाचस्पति, प्रियव्रत, वेदों के राष्ट्रगीत, स्वामी श्रद्धानंद अनुसन्धान प्रकाशन केन्द्र, हरिद्वार, 1989
- शर्मा, मुन्शीराम, वैदिक चिन्तामणि, विश्वविद्यालय प्रकाशन, नई दिल्ली, 1998
- शर्मा श्रीराम आचार्य, अथर्ववेदभाष्य, ब्रह्मवर्चस प्रकाशन, हरिद्वार, 1995
- शास्त्री, वेदप्रकाश, श्रुति मंजरी, परिमल प्रकाशन, दिल्ली, 2006
- वैयाकरणसिद्धान्तकौमुदी, गोपालदत्तपाण्डेय, चैखम्बासुरभारती वाराणसी 2013
- व्याकरणमहाभाष्यम्, प्रो.जयशंकरलालत्रिपाठी, चैखम्बा कृष्णदास अकादमी, वाराणसी 2013


---

[178] परमलघुमञ्जूषा।

[179] वाक्यपदीयं ब्रह्मकाण्डम् ।

Jahnavi Sanskrit E-Journal (The First Unpaid Sanskrit E-Journal by सारस्वत-निकेतनम्)
संस्थापकः- Dr. Bipin Kumar Jha Available at jahnavisanskritejournal.in Issue 52-53 Vol- I Year 14.
Date -01 March, 2024 JSEJ/5253/I/14/2024
Since 2009
ISSN- 0976-8645
UGC RN-41039

# CALL FOR PAPERS

शोध आलेख निर्धारित प्रपत्र एवं प्रारूप में ही स्वीकार्य किया जाएगा। अन्य किसी भी माध्यम यथा व्हाट्स् एप्, ई मेल आदि से प्रेषित आलेखों पर विचार नहीं किया जाएगा।

**देखें-**

**http://www.jahnavisanskritejournal.in/ अथवा sarasvatniketanam.org**